श्रीनिवासाचार्यविरचितम्

# प्रौढाभिरामम्

## नाटकम्

प्रधानसम्पादिका
विदुषी. डा. प्रा. एच्.पि. देवकी एम्.ए., पिएच्.डि.
निर्देशिका, प्राच्यविद्यासंशोधनालयः

सम्पादकः :
डा. के.वि.रामप्रियः एम्.ए., पिएच्.डि.
उपनिर्देशकः

प्राच्यविद्यासंशोधनालयः
मैसूरु विश्वविद्यानिलयः, मैसूरु-570005

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES NO.207

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला - २०७

# PRAUḌHĀBHIRĀMAM NĀṬAKAM

of

## ŚRĪNIVĀSĀCĀRYAH

श्रीनिवासाचार्यविरचितम्

# प्रौढाभिरामम्

नाटकम्



ORIENTAL RESEARCH INSTITUTE
MYSURU
प्राच्यविद्यासंशोधनालयः
मैसूरु
२०१६

श्रीनिवासाचार्यविरचितम्

# प्रौढाभिरामम्

## नाटकम्

प्रधानसम्पादिका :

**विदुषी. डा. प्रा. एच्.पि. देवकी** एम्.ए., पिहेच्.डि.

निर्देशिका, प्राच्यविद्यासंशोधनालयः

निवृत्तप्राध्यापिका, स्नातकोत्तरसंस्कृताध्ययनविभागः

मानसगङ्गोत्री, मैसूरुविश्वविद्यानिलयः, मैसूरु

**प्राच्यविद्यासंशोधनालयः**

मैसूरु

२०१६

# PRAUḌHĀBHIRĀMAM NĀṬAKAM
of
# ŚRĪNIVĀSĀCĀRYAH

*General Editor :*

**Vidushi : Prof. Dr. H.P. DEVAKI** M.A., Ph.D.
Director, Oriental Research Institute
University of Mysore, Mysuru
Retired Sanskrit Professor
Department of Studies in Sanskrit
Manasagangothri, Mysuru

**ORIENTAL RESEARCH INSTITUTE**
**MYSURU**
**2016**

प्राच्यविद्यासंशोधनालयग्रन्थमाला - २०७

श्रीनिवासाचार्यविरचितम्

# प्रौढाभिरामम्

## नाटकम्

सम्पादकः :

डा. के.वि.रामप्रियः एम्.ए., पिहेच्.डि.

उपनिर्देशकः

प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः

मैसूरु

२०१६

ORIENTAL RESEARCH INSTITUTE SERIES NO.207

# PRAUḌHĀBHIRĀMAM NĀṬAKAM
## of
## ŚRĪNIVĀSĀCĀRYAH

*Editor :*

**Dr. K.V. RAMAPRIYA** M.A., Ph.D.
Deputy Director
Oriental Research Institute
Mysuru

**ORIENTAL RESEARCH INSTITUTE**
**MYSURU**
**2016**

## FOREWARD

The Oriental Rsearch Institute, University of Mysore is well known in the entire world for its preservation and publication of rare sanskrit works written on palm-leaf and paper manuscripts. This 125 year old prestigious institute has published so far about 206 works and the present work 'Prauḍhābhirāmam' bears the serial number 207 among the publications of the institute under 'Oriental Research Institute Series'. Dr K.V.Ramapriya, Research Assistant, Grade-I, of the institute has edited the text of this unpublished allegorical play 'Prauḍhābhirāmam' written by the poet Śrīnivāsācārya. The editor has brought out the text with essential footnotes and also provides a brief introduction in chaste Sanskrit and Kannada languages. For this purpose he has studied and collated two manuscripts, bearing the numbers P.1178/1 and P.1212 preserved in the Oriental Research Institute. These manuscripts were with complete textual

portions of the play, written in Grantha script.

**Poet Śrīnivāsācārya :**

On historical grounds it is proved that 'Śrīnivāsācārya' was the court poet of Kaḷale Nañjarāja who flourisded in 18 A.D. Kaḷale Nañjarāja himself was a poet and promoter of art and literature, patronized many poets of Kannada and Sanskrit languages. He was the favourite 'Dalavāyi' (army commander) and feudal-chieftain of Immaḍi Kṛṣṇarāja Woḍeyar of erstwhile Mysore state. In addition to this information, the poet also helps us providing a clear identity of Nañjarāja in the first act of the play. It may be noted that in the first act (page.3) of the play, in the conversation between Sūtradhāra (stage manager) and Pāriparśvika (co-ordinator), especially in the beginning of 'Prauḍhābhirāmam' the poet pictures the presence of Kaḷale Nañjarāja in the auditorium among the assembly of dignitaries to watch the play. "adya bhagavatah ..... kaḷale vīra-bhūpāla-nandanah kila śrīnañjabhūpatih mahā-paṭa-maṇḍape-samuditam-vidwat-sabhām-ātmanaiṣa-sanāthayati". In the same context

the poet introduces himself as the son of 'Venkaṭācārya' a follower of Prabhākara-mīmāmsa in the statement 'prābhākara guroh venkaṭācāryasya tanūjah'. At the end of each act, the poet records his identity as the son of Venkaṭācārya who also a reciepient 'kavirāja' award by the king.

**Prauḍhābhirāmam :**

The allegorical play 'Prauḍhābhirāmam' is written by the poet with a motive to highlight the doctrine of karma (yāgādibhir eva karmah) glorified in the Prābhākara-school of Mimāmsa.

Allegory is the 'humanisation' or personification of inanimate things. It is as old as vedic literature. It may include human qualities, sense organs and even fundamental doctrines of philosophy and so forth. In Kṛṣṇayajurveda the quarrel of Vāk (speech), Manas (mind) and Prāṇa (life), Indriyas (senses) for superiority is beautifully illustrated in their dialogue in II.V.XI.4. In Bṛhadāraṇyaka-upaniṣad a story on the superiority of Prāṇa (life) over the senses and

the dialogue between them appear in the VI chapter of the same Upaniṣad.

Attempts were made by some later Sanskrit poets to avail the dramatic artifice to represent the vivid picture of the tenets of particular schools of philosophy. In Aśvaghoṣa's Śārīputraprakaraṇa, Buddhi, Kīrti and Dhṛti are personified as human beings and engaged in dialogue and Buddha enters at the end of the scene.

'Prabodhacandrodaya' is the first allegorical play composed by Kṛṣṇnamiśra who is a sincere follower of Advaita Vedānta and also a missionary for the propogation of Advaita. Among his several students one was averse to the study of Advaita-philosophy. To attract him towards the knowledge of Advaita, Kṛṣṇnamiśra composed 'Prabodha-candrodaya'. The allegorical plays like Saṅkalpa-sūryodaya, Chaitanya-chandrodaya, Śivaliṅga-sūryodaya are composed by philosophical teachers to attract the disciples and popularize a particular school. But, such plays are not considersd as philosophical texts.

Prauḍhābhirāmam is an allegorical play with only Five Acts (aṅkas) and the main intension of the poet Śrīnivāsācārya is to glorify Prabhākara school of Mīmāmsā. This 5 Act play is written in Vaidarbhī style. Generally, the allegorical plays are 'Śānta-rasa-pradhāna', i.e. the main sentiment is 'Śānta-rasa'. In Prauḍhābhirāmam the hero of the play or the main character is Vidhi. Artha-vāda, śakti etc. are the main roles. The great teachers of Mīmāmsā who chronologically belong to different periods also appear here as characters of the play. They are Śālikānātha, Āpadeva, Pārthasārathi, Bhānudeva and Kumārila-bhaṭṭa. The play is really attractive and appealing for those who are efficient in 'Prābhākara-school'. Hence, the poet has given the name 'Prauḍhābhirāmam' to the play composed by him.

The present work 'Prauḍhābhirāmam' is a good addition to knowledge pertaining to Sanskrit literature, reference book for researchers interested in Allegorical-Plays.

I sincerely thank Dr.K.S.Rangappa, Vice-chancellor of the University of Mysore for his constant encouragement and cooperation in the academic progress of 125 year old Oriental Research Institute. I am also thankful to the Registrar and Finance Officer, University of Mysore for their encouragement in bringing about this book.

My thanks are due to the Director, Prasaranga, University of Mysore for his suggestions and timely help. The neat appearance of the text is due to the efficiency of Vani Press, Chamarajapuram, Mysuru and I am thankful to the propriter of this printing press.

27-09-2016

**Dr(Mrs) H.P.Devaki**
Director
Oriental Research Institute
University of Mysore, Mysuru

# भूमिका

भारतीयानां ज्ञानक्षेत्रम्, अथवा ज्ञानविकासभूमिः प्राचीनेकाले 'विद्यास्थानानि' इति पर्यगणयत । तानि च चतुर्दशविधान्यासन् -

अङ्गानि वेदाश्चत्वारे मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्तुर्दश ।। इति ।

ऋग्यजुस्सामाथर्वरूपाणां चतुर्णां वेदानां चत्वार उपवेदाः क्रमशः आयुर्वेद-धनुर्वेद-गान्धर्ववेदार्थवेद (शास्त्रम्) संज्ञाः वेदेष्वेवान्तर्भूताः । अथवा पृथक्करणे विद्या संस्थानान्यष्टादश । मध्यमकाले तु ज्ञानक्षेत्रं षोढा प्रसिद्धिगतम् - न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तसंज्ञाभिः षड्-दर्शनानीति । अन्तिमे च काले न्यायव्याकरणमीमांसावेदान्तसंज्ञाभिः चतु-श्शास्त्राणीति प्राधान्येन परिगणितान्यासन् । एतान्येव चतुश्शास्त्राणि "पद-वाक्यप्रमाण" शास्त्राणीत्यपि व्यवहृतान्यभूवन् । पदशास्त्रम् = व्याकरणम्। वाक्यशास्त्रम् = मीमांसा । एषा च पूर्वोत्तरभेदेन द्विविधा । प्रमाणशास्त्रं च न्यायशास्त्रम् ।

वेदावाक्यविचाररूपत्वात् मीमांसाशास्त्रस्य 'वाक्यशास्त्रम्' इति प्रसिद्धिः । वेदस्य कर्मकाण्डज्ञानकाण्डभेदेन विभागात् मीमांसाशास्त्रमपि पूर्वमीमांसा, उत्तरमीमांसेति प्रविभक्तम् । पूर्वमीमांसायाः मूलभूतानि सूत्राणि जैमिनिमहर्षिणा प्रणीतानि, द्वादशाध्यायात्मकानि । एतेषां च भाष्यं शवरस्वामिना प्रणीतम् । एतद्भाष्यार्थव्याख्याने गुरुमतम्, भट्टमतमिति

मतद्वयमनन्तरकाले सञ्जातम् । गुरुमतस्य प्रवर्तकः प्रभाकरगुरुः । भट्टमतस्य च प्रवर्तकः सुप्रसिद्धः कुमारिलभट्टः । अयं प्रभाकरः कुमारिलभट्टस्य शिष्य एवादौ आसीत् । अनन्तरमेवाभिप्रायभेदात् स प्रत्येकमतप्रवर्तको बभूवेति केवलसाम्प्रदायिकाः केचन वदन्ति । शास्त्रप्रमेयदृष्ट्या तु प्राभाकर-मतमेव प्राचीनम्, भाट्टमतमेव नवीनमिति विमर्शका अभिप्रयन्ति । अनयोः प्रधानभूतोऽभिप्रायभेद एवं वर्तते -

| प्राभाकरमतम् | भाट्टमतम् |
|---|---|
| 1. विध्यर्थः नियोगः । | 1. विध्यर्थः भावना । |
| 2. अन्विताभिधानम् । | 2. अभिहितान्वयः । |
| 3. आत्मा स्वप्रकाशः (वेदान्तिवत्) । | 3. आत्मा जडाः (नैय्यायिकवत्)। |
| 4. शुक्तिरजतादिभ्रमः ज्ञानद्वयरूपः, अत एवाख्यातिवादः । | 4. शुक्तिरजतादिभ्रमः नैयायिकवत् विशिष्टज्ञानरूपः । अत एवान्यथाख्यातिवादः । |
| 5. प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः प्रमाणानि पञ्च । | 5. प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः प्रमाणानि । |
| 6. अभावः नातिरिक्तः पदार्थः । | 6. अभावोऽतिरिक्तः पदार्थः । |
| 7. वेदाध्ययनम् अध्यापनविधिप्रयुक्तम् । | 7. वेदाध्ययनम् अध्ययनविधिप्रयुक्तम् । |

एषु विध्यर्थ एव प्रधानभूतो विषयः । "स्वर्गकामः अग्निहोत्रेण यजेत" इत्यादि वाक्यमेव पूर्वमीमांसायां जीवातुरूपम् । अत्र "यजेत" इति विधि-लिङ् । विधिश्च लोके आज्ञारूपः । सा चाज्ञा लोके शब्दप्रयोक्तुः राजादेः

इच्छारूपा । वेदस्यापौरुषेयत्वात्, "कस्येच्छा रूपो विधिः?" इति प्रश्ने पुरुषेच्छारूपो विध्यर्थो न वक्तुं शक्यः । अतः शब्दस्यैवोपरि स भारः निक्षेप्यः । लिङ् प्रत्ययश्रवणे हि श्रोता जानाति "अयं मां एतस्मिन् कर्मणि नियोजयति" इति । अतः लिङर्थः वैदिकशब्दमत एव कश्चन विशेषः "नियोग" पदवाच्यः इति प्राभाकरः । एवञ्चास्मिन् मते शब्द-प्रयोक्तृगतोऽर्थः नियोगः लिङ्वाच्यः इत्यायाति । भाट्टास्तु प्रयोक्त्रपेक्षया फलभोक्तुः प्रयोज्यस्यैव प्रधानत्वात्, तद्दृष्ट्या "भावना" लिङर्थ इत्य-भिप्रयन्ति । कारकैः खलु कार्यं भवति । कार्यं यथा भवेत्, तथा भावयति कर्त्ता । 'घटं करोति' इत्युक्ते, 'घटो भवति' इत्यर्थः स्वयं सिद्ध्यन्ति । 'भवति' इत्यत्र हि भवनं धात्वर्थः । अतः भवनरूपक्रियाया आश्रयो घटो भवति । अत्र कुलालस्य स्थानं किम्? इति प्रश्ने, "घटो यथा भवेत्, तथा भावयति कुलाल इत्युक्ते भावनैव धात्वर्थः क्रिया भवति । लिङ्श्रवणे एतादृशक्रियाया भानात्, भावनैव लिङर्थ इत्येतेषामाशयः ।

प्राभाकरास्तु - यद्यप्ययमर्थो लोके सर्वैरनुभूयते । अथापि यत्र विधिः भवति, तत्रानुल्लङ्घनीयत्वरूपः, अथवा अनतिक्रमणीयत्वरूपोऽर्थः कश्चन सर्वानुभवसिद्धः । "वेदाच्छास्त्रं परं नास्ति" इति वेदः शास्त्राणामपि परमं शास्त्रम् । शास्त्रं नाम शासनमेव । वेदे लिङ्श्रवणेऽनुल्लङ्घनीयत्व-रूपोऽर्थो भावनायां न प्रतीयते । अतः नियोग एव लिङर्थः । यद्यपि 'रजो नियोगः' इति व्यवहारात् नियोगो लौकिक इव भवति, तथापि वेदे तादृशपुरुषस्याभावात्, नियोगः अलौकिक एव कश्चनार्थो भवति । एवश्च नियोगवाक्यार्थ एव वेदे प्रामाणिक इत्यभिप्रयन्ति ।

प्रकृतग्रन्थकारः श्रीनिवासाचार्यः प्राभाकरमतानुयायीति स्वयमेव बहुषु प्रकरणेषु प्रकटयति । न तावन्मात्रम्, तत्पितापि तादृश इति "प्राभाकर-

वेङ्कटाचार्यतनयस्य" इति वदन् प्रकटयति । प्राभाकरमततत्त्वं सर्वैरपि सुलभतया जातुं यथा शक्यम्, तथा प्रतिपादयितुमयमिमं नाटकं रचयामास । तत्त्वानामेव पात्रकल्पनेन नाटकरचनमत्यन्तविरलमेव । एतादृशानि नाटकानि "भावना प्रधानानि" (Alligorical) इति व्यवहरन्ति नवीनाः। अद्वैतसिद्धान्तप्रतिपादकं प्रबोधचन्द्रोदयं नाम नाटकम् । श्रीकृष्णमिश्रकृतमेकं प्रसिद्धम् । तथैव विशिष्टाद्वैततत्त्वप्रतिपादकं सङ्कल्पसूर्योदयं नाम नाटकं श्रीवेङ्कटनाथेन विरचितमपरं च प्रसिद्धम् । एवमेवान्यान्यपि चैतन्यचन्द्रोदयशिवलिङ्गसूर्योदयादीन्यपि दृश्यन्ते कतिचन । तथैवेदं प्राभाकरमततत्त्वप्रतिपादकं श्रीनिवासाचार्यविरचितं प्रसिद्धिमानीयत इदानीम् ।

विधिशक्तिः नियोग एव, न तु भावनायां कुमारिलाभिगतायामिति निरूपयितुं प्रवृत्तः, विधेरेव प्रधाननायकतां कल्पयति । विधिशब्दः किल पुंलिङ्गान्तः । तथैव शक्तिशब्दः स्त्रीलिङ्गान्तः । अतः सैव नायकी कृता। मीमांसाशास्त्रप्रसिद्धा अर्थवादादयः अमात्यादि पात्रीकृताः । कुमारिलमतानुयायिनः पार्थसारथिमिश्रादयः, गुरुमतानुयायिनः शालिकनाथादयश्च तत्तदनुगुणपात्रीकृताः । विधिशक्तेः भावनां परित्यज्य नियोगे विश्रान्तिसाधनमेव नाटकप्रधानविषयः ।

अयं च श्रीनिवासाचार्यः सुप्रसिद्धस्य कळले प्रान्ताधिपतेः नञ्जराजस्यास्थान आसीदिति एतन्नाटकसूत्रधारवाक्यादेवावगम्यते । श्रीनञ्जराजोऽयं मैसूरुराज्यस्य द्वितीयकृष्णभूपालस्य 'दलवाय्' इति कन्नडभाषायां प्रसिद्धं प्रधानसेनानीस्थानमलङ्कुर्वन्नासीदिति चारित्रिकविषयोऽयं सर्वजनविदितः। अत एव चास्य कालोऽपि क्रैस्ताष्टादशशतकीय इत्यपि ज्ञायते। सामन्तराजा सन्नप्ययं स्वप्रभाववशात्, स्वतन्त्रराजवेदवासाधारणीं कीर्तिमावहति वबूनां विद्वद्वराणामाश्रयदाता, वहूनां ग्रन्थकाराणां प्रोत्साहकः,

स्वयमप्यनेकग्रन्थनिर्माता महाधार्मिकाग्रेसारश्चासीदित्यादिकमपि मैसूरु-राज्यचरित्रादेवावगम्यते । किमुत ! एनमधिकृत्य 'अभिनवकालिदासे' इति विरुदभाजा नरसिंहकविना विरचितः नञ्जराजयशोभूषणनामालङ्कारग्रन्थः प्रतापरुद्रयशोभूषणवत् प्रसिद्धो विद्वल्लोके वरीवर्तते ।

प्रौढशास्त्रार्थगर्भत्वादेवेदं नाटकम् "प्रौढाभिरामम्" इति कर्त्रा संज्ञितं इति प्रतिभाति । प्रौढानाम् अभिरामम्, प्रौढैर्विषयैर्वाभिराममित्यर्थो विवक्षितस्स्यादिति भाति । विषयनिरूपणप्रक्रियायां तु अयं कविः पण्डितानां वादसरणीमेवानुकरोतीति तृतीयेऽङ्के आपदेवभवदेवयोः पात्राभ्यामवगम्यते। अतिगम्भीरशास्त्रार्थं गर्भमिदं नाटकं विदुषां स्वागतमर्हति ।

डा. के.वि.रामप्रियः
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः, मैसूर

# ಪೀಠಿಕೆ

ಈ ಪ್ರೌಢಾಭಿರಾಮವೆಂಬ ನಾಟಕವು ಪ್ರಾಭಾಕರಮೀಮಾಂಸಾ ದರ್ಶನದ ವಿಷಯಗಳನ್ನು ನಾಟಕದ ರೂಪದಲ್ಲಿ ಕೊಡುವ ಸಾಹಿತ್ಯ. ಇದನ್ನು ಶ್ರೀಶೈಲಕುಲದ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯನೆಂಬ ಪಂಡಿತನು ರಚಿಸಿರುತ್ತಾನೆ. ಇವನಿಗೆ ವಿದ್ವತ್ ಕವಿರಾಜನೆಂಬ ಬಿರುದಿತ್ತೆಂದು ಗೊತ್ತಾಗಿದೆ. ಪ್ರಭಾಕರಶಾಖೆಯ ಮೀಮಾಂಸಾ ದರ್ಶನದಲ್ಲಿ ಪಾರಂಗತನಾದ ವೆಂಕಟಾಚಾರ್ಯನೆಂಬುವನ ಮಗನಿವನೆಂಬುದು, ಈ ಪ್ರೌಢಾಭಿರಾಮನಾಟಕದ ಪ್ರತಿಯೊಂದು ಅಂಕದ ಕೊನೆಯಲ್ಲಿನ ಪುಷ್ಪಿಕಾ ವಾಕ್ಯದಿಂದ ತಿಳಿಯುತ್ತದೆ. ಇವನಿದ್ದುದು ಇಮ್ಮಡಿ ಕೃಷ್ಣರಾಜನ ಸಮಕಾಲೀನ-ನಾಗಿದ್ದ ಕಳಲೆ ನಂಜರಾಜನ ಆಸ್ಥಾನದಲ್ಲಿ. ಆದ್ದರಿಂದ ಇವನ ಕಾಲ 18ನೇ ಶತಮಾನದ ಪೂರ್ವಾರ್ಧವಾಗುತ್ತದೆ.

ಭಾವನೆಗಳಿಗೆ ನಾಟಕಪಾತ್ರದ ಆಕಾರವನ್ನು ಕಲ್ಪಿಸಿಕೊಡುವ ನಾಟಕಗಳು ಸಂಸ್ಕೃತದಲ್ಲಿ ಕೆಲವಿವೆ.ಕೃಷ್ಣಮಿಶ್ರನ ಪ್ರಬೋಧ ಚಂದ್ರೋದಯ,ವೇದಾಂತದೇಶಿಕನ ಸಂಕಲ್ಪಸೂರ್ಯೋದಯ,ಚೈತನ್ಯಚಂದ್ರೋದಯ, ಶಿವಲಿಂಗ ಸೂರ್ಯೋದಯ ಮುಂತಾದ ನಾಟಕಗಳು ಇದೇ ಜಾತಿಯವು. ಇವುಗಳು ಒಂದೊಂದು ಸಿದ್ಧಾಂತದ ಕಡೆಗೆ ಬಾಗುವುದುಂಟು. ಸಾಹಿತ್ಯಿಕವಾಗಿ ಕವಿಗಳು ತಮಗೆ ಅಭಿಮತವಾದ ಸಿದ್ಧಾಂತ ಸಂಪ್ರದಾಯಗಳ ಧ್ವಜ ಹಾರಿಸುವುದು ಅವುಗಳ ಉದ್ದೇಶವೇ ಹೊರತು ಆಯಾ ಸಿದ್ಧಾಂತಶಾಸ್ತ್ರಗ್ರಂಥಗಳ ಪರಂಪರೆಯಲ್ಲಿ ಅವುಗಳಿಗೆ ಸ್ಥಾನ ಕೊಡುವುದು ಆಗದು. ಉದಾಹರಣೆಗೆ ಹೇಳುವುದಾದಲ್ಲಿ ಪ್ರಬೋಧಚಂದ್ರೋದಯವನ್ನು ನಾಟಕವೆಂದೇ ಕರೆಯಬೇಕೇ ಹೊರತು ಅದ್ವೈತಗ್ರಂಥಗಳ ಇತಿಹಾಸದಲ್ಲಿ ಅದಕ್ಕೆ ಸ್ಥಾನ ಕಲ್ಪಿಸುವುದು

ಕಷ್ಟ. ಏಕೆಂದರೆ ಅದ್ವೈತದ ಪಾರಿಭಾಷಿಕ ಶಬ್ದಗಳಾದ ಅಧ್ಯಾಸ, ಅನಿರ್ವಚನೀಯ ಖ್ಯಾತಿ ಇತ್ಯಾದಿ ಶಬ್ದಗಳು ಅವುಗಳ ಪಾತ್ರಗಳಲ್ಲ. ಈ ಕಾರಣದಿಂದಾಗಿ, "ಅದ್ವೈತದ್ದೇ ಆದ ಶಾಸ್ತ್ರಗ್ರಂಥವು ನಾಟಕದ ರೂಪ ತಾಳಿದೆ" ಎಂಬ ರೀತಿಯ ಅಭಿಪ್ರಾಯವನ್ನು ಅದಕ್ಕೆ ಕೊಡಲಾಗುವುದಿಲ್ಲ. ಆದರೆ ಈ ನಾಟಕಕರ್ತೃವು ಅದ್ವೈತದ ಕಡೆಗೆ ಓಲುವುದುಂಟು ಎಂಬಷ್ಟು ಮಾತ್ರ ಅದರ ಬಗೆಗೆ ಹೇಳಬಹುದು. ಈ ಮಾತು ಉಳಿದ ನಾಟಕಗಳಿಗೂ ಅನ್ವಯಿಸುತ್ತದೆ.

ಆದರೆ ಪ್ರೌಢಾಭಿರಾಮ ನಾಟಕವು ಆ ರೀತಿಯದ್ದಲ್ಲ. ಪ್ರಾಭಾಕರ-ಮೀಮಾಂಸಾದರ್ಶನದ ಪಾರಿಭಾಷಿಕಶಬ್ದಗಳನ್ನೇ ಈ ನಾಟಕವು ಪಾತ್ರದ ರೂಪದಲ್ಲಿ ಬಳಸುತ್ತದೆ. ವಿಧಿ, ಶಕ್ತಿ ಅರ್ಥವಾದ ಇವೆಲ್ಲ ಈ ನಾಟಕದ ಪಾತ್ರಗಳು. ಬೇರೆ ಯಾವ ನಾಟಕದಲ್ಲಿಯೂ ಕಾಣದ ಒಂದು ವಿಶೇಷವೇನೆಂದರೆ, ಪ್ರಸಿದ್ಧ ಮೀಮಾಂಸಕರನ್ನೇ ಪಾತ್ರಧಾರಿಗಳನ್ನಾಗಿ ಇಲ್ಲಿ ತಂದಿರುವುದು. ಶಾಲಿಕನಾಥ, ಆಪದೇವ, ಪಾರ್ಥಸಾರಥಿ, ಭಾನುದೇವ ಹಾಗೂ ಕುಮಾರಿಲಭಟ್ಟಾಚಾರ್ಯ ಇವರುಗಳನ್ನು ನಾಟಕದ ಪಾತ್ರಗಳಾಗಿ ಪ್ರವೇಶ ಮಾಡಿಸಿರುವುದು. ಇತಿಹಾಸವನ್ನು ನಿಷ್ಠುರವಾಗಿ ಅನ್ವಯಿಸಿ ಹೇಳುವುದಾದಲ್ಲಿ ಇವರಾರೂ ಸಮಕಾಲಿಕರಲ್ಲ. ಮೀಮಾಂಸಾ ದರ್ಶನದ ವಿವಿಧ ದೃಷ್ಟಿಕೋನಗಳೆಲ್ಲ ಯಾವುದಾದರೊಂದು ರೀತಿಯಲ್ಲಿ ತನ್ನ ಸಾಹಿತ್ಯದಲ್ಲಿಪ್ರತಿನಿಧಿಸುವಂತೆ ಆಗಬೇಕೆಂಬುದು ನಾಟಕಕಾರನ ಉದ್ದೇಶ.

ಪ್ರೌಢವೆಂಬ ಶಬ್ದವು ಪ್ರಾಭಾಕರಮೀಮಾಂಸಾದರ್ಶನದ ಅನುಯಾಯಿಗಳನ್ನು ತಿಳಿಸುತ್ತದೆ. ಅಂಥವರಿಗೆ ಮಾತ್ರ ರಮಣೀಯವಾಗಿ ಅರ್ಥಾತ್ ಸುಂದರವಾಗಿ ಕಾಣುವ ಕೃತಿಯೆಂಬ ಅರ್ಥವನ್ನಿಟ್ಟುಕೊಂಡು ಇದಕ್ಕೆ ಪ್ರೌಢಾಭಿರಾಮವೆಂಬ ಹೆಸರನ್ನು ಕರ್ತೃ ನೀಡಿದ್ದಾನೆ. ಸುಂದರವಾದ ಶೈಲಿಯನ್ನು ಬಳಸಿದ್ದಾನೆ. ಹೆಚ್ಚಿನ ಸಂದರ್ಭದಲ್ಲಿ ಭಾಷೆ ಸರಳವೇ ಆಗಿದೆ. ವರ್ಣನೆಗಳು ಆಕರ್ಷಕವಾಗಿವೆ.

ಉದಾಹರಣೆಗೆ ಈ ಪದ್ಯ ನೋಡಬಹುದು :

ನಕ್ಷತ್ರಮಾತ್ರಮ್ ಉಡುವರ್ತ್ಮನಿ ದೃಷ್ಟಮಾದೌ
ಕಿಂಚಿತ್ತತೋಽವತರದಾರುಣಬಿಂಬದಘ್ನಮ್ |
ತೇಜಸ್ತತಸ್ತದಿದಮಾಕೃತಿಶಾಲಿ ಕಿಂಚಿದ್
ದಿವ್ಯಂ ವಿಮಾನಮುಪಕಂಠಗತಂ ಬತಾಸೀತ್ || (5.7)

(ನಕ್ಷತ್ರಗಳ ಮಾರ್ಗದಲ್ಲಿ ಒಂದು ನಕ್ಷತ್ರ ಮೊದಲು ಕಾಣಿಸಿತು. ಆಮೇಲೆ ಕಂಡಿದ್ದು ಉದಯಸೂರ್ಯನ ಕಂಪು ಮಂಡಲದ ಗಾತ್ರದ ವಸ್ತು.ಆಮೇಲೆ ಸ್ಪಷ್ಟವಾಗಿ ಆಕೃತಿ ತಳೆದ ವಿಮಾನವು ಹತ್ತಿರದಲ್ಲಿಯೇ ಗೋಚರಿಸಿತು.)

ವಿವಿಧವಾದ ಸಿದ್ಧಾಂತಗಳ ಕಡೆಗೆ ಬಾಗುವುದಲ್ಲದೆ ತಮ್ಮ ವೈಯಕ್ತಿಕವಾದ ಜೀವನದರ್ಶನಾದಿಗಳನ್ನೂ ಪ್ರಪಂಚವೀಕ್ಷಣೆ ಮಾಡುವಾಗ ಕಾಣುವ ಗುಣದೋಷಗಳನ್ನೂ ತೋರಿಸುವ ಉದ್ದೇಶ ಪ್ರಬೋಧಚಂದ್ರೋದಯ ಮುಂತಾದುವುಗಳ ಕರ್ತೃಗಳಿಗೆ ಇದ್ದಿದ್ದರಿಂದ ಅವುಗಳಲ್ಲಿ ಪ್ರಕೃತಿವರ್ಣನೆ ಇತ್ಯಾದಿಗಳು ಅಪೇಕ್ಷಿತವಾದ ಗುಣಗಳೇ ಆಗುತ್ತವೆ.ಆದರೆ ಪರಮ ಶುದ್ಧವಾದ ಮೀಮಾಂಸಾದರ್ಶನದ ಸಾಹಿತ್ಯಿಕರೂಪವಾಗಿರುವ ಪ್ರೌಢಾಭಿರಾಮ ನಾಟಕದಲ್ಲಿ ಅವುಗಳ ಸೇರ್ಪಡೆ ಹೇಗೆ ಸರಿ ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವಿದ್ದೇ ಇದೆ.

ಮೀಮಾಂಸಾಮತದಲ್ಲಿ ಕೌಮಾರಿಲಸಂಪ್ರದಾಯ ಹಾಗೂ ಪ್ರಾಭಾಕರ-ಸಂಪ್ರದಾಯವೆಂಬ ಎರಡು ಸಂಪ್ರದಾಯಗಳಿವೆ. ಇವುಗಳಲ್ಲಿ ಮೊದಲಿನದ್ದು ಕುಮಾರಿಲಭಟ್ಟನದ್ದು. ಪ್ರಭಾಕರನು ಪ್ರಾರಂಭಿಸಿದ್ದು ಎರಡನೆಯದು.

ಪ್ರಭಾಕರನು ಕುಮಾರಿಲನ ಶಿಷ್ಯನೆಂಬ ಅಭಿಪ್ರಾಯವು ಹೇಗೋ ಪ್ರಚಾರಕ್ಕೆ ಬಂದುಬಿಟ್ಟಿದೆಯಾದರೂ ಇದು ಒಪ್ಪಲಾಗದ ವಿಷಯ. ವಾಸ್ತವಿಕವಾಗಿ

ನೋಡಹೋದರೆ, ಪ್ರಭಾಕರನೇ ಪ್ರಾಚೀನನೆಂದೂ ಕುಮಾರಿಲನು ಅವನ ಅನಂತರದ ಕಾಲದವನೆಂದೂ ಈಗ ಸಂಶೋಧಕಮಂಡಲಿಯಲ್ಲಿ ತೀರ್ಮಾನವಾಗಿದೆ.

ಪ್ರಭಾಕರನ ಅನುಯಾಯಿಗಳು ಹಾಗೂ ಕುಮಾರಿಲನ ಅನುಯಾಯಿಗಳಲ್ಲಿ ಕೆಲವು ಮತಭೇದಗಳಿವೆ. ಅಭಾವವೆಂಬುದನ್ನು ಒಂದು ಪದಾರ್ಥವೆಂದು ಕೌಮಾರಿಲ ಸಂಪ್ರದಾಯದ ಅನುಯಾಯಿಗಳು ಒಪ್ಪುತ್ತಾರೆ. ಆದರೆ ಪ್ರಭಾಕರಮತಾನು-ಯಾಯಿಗಳು ಒಪ್ಪುವುದಿಲ್ಲ.

ಯಜೇತ ಇತ್ಯಾದಿ ಕ್ರಿಯಾಪದಗಳು ಇರುವುದು ವಿಧಿಲಿಙ್ ಲಕಾರದಲ್ಲಿ. ವಿಧಿಲಿಙ್‌ಲಕಾರವು ತಿಳಿಸುವುದು ವಿಧಿಯನ್ನು ಎಂದೇನೋ ಈ ಲಕಾರದ ಹೆಸರಿನಲ್ಲಿಯೇ ಗೊತ್ತಾಗುತ್ತದೆ. ಆದರೆ ಈ ವಿಧಿಯೆಂದರೇನು ಎಂಬುದು ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವಿದೆ. ವಿಧಿಯೆಂದರೆ ಮೂಲಾರ್ಥ ಆಜ್ಞೆ. ಲೋಕದಲ್ಲಿಯೇನೋ ರಾಜಾಜ್ಞೆ ಇತ್ಯಾದಿಗಳಲ್ಲಿ ಇದನ್ನು ಹೊಂದಿಸಬಹುದು. ಆದರೆ ವೇದದಲ್ಲಿ ಇದು ಯಾರ ಆಜ್ಞೆ ಎಂಬ ಸಂಶಯಕ್ಕೆ ಅವಕಾಶವಿದೆ. ವೇದ ಅಪೌರುಷೇಯವಾದದ್ದರಿಂದ ಈ ಆಜ್ಞೆಯು ವೇದಶಬ್ದದ್ದು ಎಂದು ಹೇಳಲು ಸಾಧ್ಯವಿದೆ. ಈ ಆಜ್ಞೆಯು ಪ್ರೇರಕತ್ವರೂಪದಲ್ಲಿ ಇರುವಂಥದ್ದು. ಇದು ವೇದಶಬ್ದನಿಷ್ಠವಾದದ್ದು ಎಂಬುದು ಕುಮಾರಿಲ ಮತಾನುಯಾಯಿಗಳ ವಾದ. ಈಶ್ವರಾಜ್ಞೆ ಎಂಬ ಅರ್ಥವನ್ನು ಇದಕ್ಕೆ ಕೊಡಲು ಸಾಧ್ಯವಿಲ್ಲವೇ ಎಂಬ ಪ್ರಶ್ನೆ ಬರುತ್ತದೆ. ಸಾಧ್ಯವಿಲ್ಲ. ಏಕೆಂದರೆ ಈಶ್ವರನನ್ನು ಮೀಮಾಂಸಕರು ಒಪ್ಪುವುದಿಲ್ಲ. ಇಲ್ಲಿ, ಪ್ರಭಾಕರ ಮತದ ಅನುಯಾಯಿಗಳು ವಾದಿಸುವುದೇನೆಂದರೆ, ವಿಧಿಯೆಂಬ ಶಬ್ದವು ಇರುವುದು ನಿಯೋಗವೆಂಬ ಅರ್ಥದಲ್ಲಿ. ಯಜೇತ ಎಂಬ ಶಬ್ದವನ್ನು ಕೇಳಿದ ಕೂಡಲೇ ಯಜ್ಞ ಮಾಡಲು ಈ ವಾಕ್ಯವು ನನ್ನನ್ನು ನಿಯೋಜಿಸುತ್ತಿದೆ ಎಂಬುದು ಕೇಳಿದವನಿಗೆ ಗೊತ್ತಾಗುತ್ತದೆಯಾದ್ದರಿಂದ ನಿಯೋಗ ಎಂಬುದೇ ವಿಧಿಲಿಙ್ ಲಕಾರದ ಅರ್ಥ.

ಕುಮಾರಿಲಾನುಯಾಯಿಗಳ ಪ್ರಕಾರ ಪ್ರತ್ಯಕ್ಷ ಅನುಮಾನ ಉಪಮಾನ ಶಬ್ದ ಅರ್ಥಾಪತ್ತಿ ಅನುಪಲಬ್ಧಿ ಹೀಗೆ ಒಟ್ಟು ಆರು ಪ್ರಮಾಣಗಳು. ಆದರೆ, ಪ್ರಾಭಾಕರ ಪಕ್ಷದವರು ಅನುಪಲಬ್ಧಿಯನ್ನು ಪ್ರಮಾಣವೆಂದು ಒಪ್ಪುವುದಿಲ್ಲವಾಗಿ ಅವರ ಪ್ರಕಾರ ಐದೇ ಪ್ರಮಾಣಗಳು.

ಪ್ರಭಾಕರನ ಪ್ರಕಾರ ವಿಧಿಲಿಙ್‌ನ ಅರ್ಥವು ನಿಯೋಗವೆಂಬ ಸಿದ್ಧಾಂತಕ್ಕೆ ಗೆಲುವಾಗಿ ಆ ಅರ್ಥದಿಂದ ಕೂಡಿದ ವಿಧಿಯೆಂಬುದು ಸಿಂಹಾಸನವನ್ನೇರುವ ಅವಕಾಶವನ್ನು ಪಡೆದುಕೊಳ್ಳುವುದು ಒಟ್ಟು ನಾಟಕದ ಹಂದರ. ಈ ನಾಟಕದಲ್ಲಿ ಒಟ್ಟು ಐದು ಅಂಕಗಳಿವೆ ಹಾಗೂ 121 ಪದ್ಯಗಳಿವೆ.

ಸಂಪಾದನಾಕಾರ್ಯಕ್ಕಾಗಿ ತೆಗೆದುಕೊಂಡಿರುವ ಹಸ್ತಪ್ರತಿಗಳ ವಿವರಗಳು ಈ ಕೆಳಕಂಡಂತಿವೆ :

| | ಹಸ್ತಪ್ರತಿ ಸಂಖ್ಯೆ | ಲಿಪಿ | ಸಂಕೇತ | ಅಳತೆ | ಪುಟ | ಸಮಗ್ರ / ಅಸಮಗ್ರ |
|---|---|---|---|---|---|---|
| 1. | P.1178/1 | ಗ್ರಂಥ | ಕ | 40 x 3.5 | 1-44 | ಸಮಗ್ರ |
| 2. | P.1212 | ಗ್ರಂಥ | ಖ | 35 x 3.8 | 1-26 | ಸಮಗ್ರ |

ಇದುವರೆಗೆ ಈ ನಾಟಕವು ಎಲ್ಲೂ ಬೇರೆಡೆ ಪ್ರಕಟವಾಗಿಲ್ಲ. ಮೊಟ್ಟಮೊದಲಿಗೆ ಈ ನಾಟಕವು ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಾಲಯದಿಂದ ಪ್ರಕಟವಾಗುತ್ತಿದೆ.

ಡಾ. ಕೆ.ವಿ.ರಾಮಪ್ರಿಯ
ಉಪನಿರ್ದೇಶಕ
ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಾಲಯ, ಮೈಸೂರು

श्रीनिवासाचार्येण प्रणीतं

# प्रौढाभिरामम्

## नाटकम्

## प्रथमोऽङ्कः

◆ स्वार्थान्वयसन्निहितस्य शक्ति-
मापादयन्नेष नियोगशक्तः[1] ।
सर्वस्वतन्त्रस्सकलोपजीव्यो
विधिर्महाराज इवाविरस्ति ।। 1 ।।

(नान्द्यन्ते सूत्रधारः, विहस्य)

पठिता सुलभा नान्दी प्रयोगस्तु सुदुर्घटः ।
गृहालङ्कारमात्रेण निवृत्तः किं महोत्सवः ।। 2 ।।

सूत्रधारः - अतिकर्कशे कर्मणि न्ययुङ्क्त किलास्मान् गौरववशादनतिसन्धेयादेशस्तत्र भवान् विद्वत्कविराजपट्टभद्रः । कथमधुना भवितव्यम्? (नेपथ्याभिमुखमवलोक्य) मारिष ! इतस्तावत् ।

---

◆ "एपा द्वादशपदा नान्दी" इति मातृकाद्वयेऽपि वर्तते ।
"अर्थतः शब्दतो वाऽपि मनाक् काव्यार्थसूचनम् ।
यत्राप्टभिर्द्वादशभिरप्टादशभिरेव वा ।
द्वाविंशत्या पदैर्वाऽपि सा नान्दी परिकीर्त्यते ।।"
इति नान्दी लक्षणम् । (प्रतापरुद्रीयम्, ना.प्र.34)

---

1. शक्तिः - क

(प्रविश्य पारिपार्श्वकः)

**पारिपार्श्वकः** - भाव ! एषोऽस्मि ।

**सूत्रधारः** - मारिष ! पश्य पण्डितमाण्डलपरिमण्डितमिदमास्थानम् । (स्मृतिमभिनीय) भोः ! स्मरतु च भवान् । इदं तु[1] किलादिष्टं तेन महाकविना ।

**यथाकथं वा महतां प्रतिज्ञा**
**न हि स्वकीयं विषयं जहाति ।**
**यथा ⌖तुरीयेऽन्यकृतैकताक-**
**मप्याद्यसूत्रस्य तदर्थजातम् ।। 3 ।।**

इति । इतरथा कथमस्मान् पुरा ❖केवलब्राह्मणानेव सतः स्वयमेव सकरुणमाकार्य साङ्गनाट्यवेदोपदेशेन नयेदिमां लोकरञ्जनीं वृत्तिम् । तस्य वयं ✵लालाटिका[2]श्चिरमादेशं नातिसन्धातुमर्हामः । यदि तर्हि प्रयोगपाटवं सम्यगालोचयेम ।

---

⌖ पूर्वमीमांसायां हि - "अथातो धर्मजिज्ञासा" इति शास्त्रारम्भे धर्मविचारः प्रतिज्ञातः । परन्तु चतुर्थाध्यायारम्भे "अथातः क्रत्वर्थपुरुषार्थजिज्ञासा" (4-1-1) इति विचारान्तरं प्रतिज्ञातमिवापाततः प्रतीयते । अथापि, अयमपि विचारः प्रथमसूत्रप्रतिज्ञायामेवान्तर्भूतोऽपि विच्छित्तिविशेपप्रदर्शनार्थं पुनः प्रतिज्ञा कृतेव भवति । वस्तुतस्तु अयमर्थः प्रथमसूत्रान्तर्गत एवेति समर्थ्यते । अत्र श्लोके पूर्वार्धे महतां प्रतिज्ञा स्वविपयं कदापि न विजहाति इति उक्तस्यायं दृष्टान्ततया प्रादर्शि महामीमांसकेन ग्रन्थकर्ता ।

❖ केवलब्राह्मणाः - नाममात्रब्राह्मणाः । सविनयोक्तिरियम् ।

✵ लालाटिकाः - ललाटदेशोद्भवाः ।

---

1. इदञ्च - ख
2. श्चिरादेशं - ख

(परिक्रम्यावलोक्य च ससंभ्रमम्)

मारिष ! पश्य । अद्य भगवतः ◈कपिलाकौण्डिनीमध्यवर्तिनः श्रीकण्ठस्य वसन्तडोलामहोत्सवे कळले वीरभूपालनन्दनः किल श्री नञ्जभूपतिर्महापटमण्टपे समुदितां [1]विद्वत्सभामात्मनैष सनाथयति । तदाशु पठ्यतां नान्दी ।

**पारिपार्श्वकः** - (विहस्य) भाव ! कृतं प्रयोगसङ्घटनोपायचिन्तया । यत आत्मानमपि विस्मरसीव✷ ।

**सूत्रधारः** - (स्वगतम्) हठात् किल प्रसक्तोऽयं भ्रमः । कथञ्चिदुक्तं समर्थये✦ । (प्रकाशम्) मारिष स्वदोषमन्यत्रारोपयसि यन्मयोपमानोपमेयभावव्यत्ययमाश्रित्य महाराजो [2]विधिरिवाविरस्तीति स्तोतुमेनं राजानं प्रकृतोचितमेवोक्तम् । (सभाभिमुखो भूत्वा सप्रश्रयमञ्जलिं बद्ध्वा) भो भो अभिनवभट्टपादप्रमुखा आर्यमिश्राः ! तत्र भवतो वयं विद्वत्कविराजपट्टभद्रस्यान्तेवासिनः तदादेशात् प्रौढाभिरामं नाम नाटकं तदीयं प्रयुञ्जानाः युष्मानुपतिष्ठामहे । इह तावत् मुहूर्त[3]मादरोऽस्त्वत्र भवताम् ।

(आकाशे कर्णं दत्वा) किं ब्रूथ ! स खलु गुरुदर्शनपारावार-

---

◈ कौण्डिनी इति 'गुण्ड्लु होळे' इति भाषायां प्रसिद्धायाः कपिलानद्युपनद्याः नाम ।

✷ नान्द्याः पूर्वमेव पठितत्वात्, उपहासोक्तिः ।

✦ स्वामिनामयं स्वभावः स्वस्खालित्याच्छादनम् ।

---

1. भवत्सभ - ख
2. विधिरिवाविस्तीति - ख
3. मादरस्तत्र - ख

कूलङ्कषधिषणस्य ♦धिषणोपमस्य श्रोत्रियकुलाभ्यर्हितस्य❖ तत्र भवतः प्राभाकरवेङ्कटगुरोस्तनुज✽ इति विशेषेण तदीयवाग्विलसितेऽस्माकं [1]अस्ति कुतूहलमिति । तर्हि धन्या वयम् ।

(पुनः परिक्रम्यावलोक्य च)

मारिष ! पश्य -

◈**आश्रितसन्तापहृतां पल्लवितानां द्विजोपरक्तानाम् ।**
**विहितस्वरमुखराणां वत! शाखानां प्रकाशसमयोऽयम् ।। 4।।**

(नेपथ्ये) ✷साधु भरतपुत्र ! साधु । तवेयमुक्तिः क्वचित्

---

♦ धिषणः = वृहस्पतिः । "वृहस्पतिस्सुराचार्यो गीर्पतिर्धिषणो गुरुः" इत्यमरः । (ना.लिं., दिग्वर्गः)

❖ अभ्यर्हितः = श्रेष्ठः ।

✽ "स खलु" इति प्रारम्भे उक्तः ग्रन्थकारः । श्रीनिवासाचार्यः ।

◈ शाखाः वृक्षशाखाः, वेदशाखाश्च विवक्षिताः आश्रितसन्तापहृतामित्यादीनि शाखाजामित्यस्य विशेषणानि । वृक्षशाखाः, आतपक्लेशात् स्वाश्रितानां छायावितरणेन सन्तापं हरन्ति पल्लवितानां सञ्जातकिसलयाः, द्विजैः पक्षिभिः उपरक्ताः = प्रीत्या आश्रिताः, अत एव विहितैः विविधैः पक्षिणां कूजितैः शब्दायमानाः । वेदशाखापक्षे, आश्रिताः = अध्येतारः, तेषां तापं = पापं हरन्ति। पल्लविताः = वहुधा विस्तृता वेदशाखाः द्विजैः = व्राह्मणैः उपरक्ताः । तादृशैः अध्येतृभिः विहितस्वरमुखराः सस्वरमुच्यमानाश्च ।

✷ "वेदशाखानां प्रकाशसमयोऽयम्" इति कथनात्, तत् शृण्वतो वेदस्य सन्तोपातिशयादियमुक्तिः । वेदो नामापूर्वार्थवोधकः । अतो वेदेपु लिङ् एव प्राधान्यम्। इतरत्सर्वं तच्छेपभूतमिति प्राभाकराः । प्राभाकरसिद्धान्तसम्वन्धिनां प्रमेयाणां पात्रकल्पनया रचितेऽस्मिन्नाटके, विधिरेव महाराजः । विधेः कुत्र शक्तिः? इत्यस्य प्रधानविचाररूपत्वात् शक्तिरेव प्रधानमहिपी । एवं विधेः पोपकः अर्थवाद एव मन्त्री । एवं प्राभाकरमततत्त्वानामेवात्र पात्रकल्पनं द्रष्टव्यम् ।

---

1. कुतूहल - ख

सुखविश्रान्तिमलभमानां मम सहचरीं शक्तिं प्रति दूयमानस्य चिरादिमां चिन्तामन्तरेण मत्प्रकाशसमयं प्रतीक्ष्यमाणस्य श्रवसी मम सुधास्यन्दैरिव सिञ्चति ।

**सूत्रधारः** - मारिष ! श्रृणोषि । एवं विधसमवस्थस्य [1]विधेर्भूमिकामादाय [2]जागर्त्येव वैष ज्यायान् मम रङ्गप्रदीपः । तदावाभ्यामनन्तर-करणीयाय सज्जीभवितव्यमञ्जसा ।

(इति निष्क्रान्तौ)

## प्रस्तावना

(ततः प्रविशति विधिरर्थवादश्च)

**विधिः** - (शक्तिं विभाव्य) सखे अर्थवाद ! पश्य ।

**वक्षः किञ्चिदुदञ्चितोभयतटं [3]लज्जास्पृगक्षिद्वयं**
**चेतः कामवशंवदं [4]फणितयो ❖मन्दाक्षमन्दाक्षराः ।**
**[5]उद्यद्यौवनमुग्धमङ्गमधुना नित्योपभोगोचितं**
**प्रेयस्यास्तु मम क्वचिन्न घटते विश्रान्तिरस्या बत! ।। 5।।**

---

❖ मन्दाक्षम् = लज्जा । "मन्दाक्षं ह्रीस्त्रपाव्रीडालज्जा" इत्यमरः । लज्जया मन्दाक्षराः फणितयः इत्यन्वयः ।

---

1. विधेर्भूत्यका - ख
2. जागर्त्येव वैष ज्याधान् - ख
3. वज्ञा - ख
4. प...तयो - ख
5. मद्यद्यच्चन - ख

स्वाभाविकी लौकिकविधि[1]शक्तीनां लोकवशात्◆ कुहचिद-विश्रान्तिः । हन्त ! मम ❖साधिकारवाक्याधिष्ठितस्यापि स्वशक्तिव्यवस्थापनाधिकारविरहिता । धिक् धिक् !

**त एव पुरुषा ये तु कळत्रत्राणकोविदाः ।**
**❋किं ते पुमांसो ये कामं विहस्ता दारपोषणे ।। 6 ।।**

(उत्साह[2]मवलम्ब्य)

अये ! व्यवस्थापयिष्यामि कथञ्चित्तव विश्रान्तिभूमिम् । तावत् मा विषीद !

(प्रविश्य शक्तिः)

**शक्तिः** - अअउत्त विअढ्ढजणाणं इदो तदो कढ्ढणेण◈ बळिअ खु पडिस्संदंहि । पडित्ताअस्स मं । ✹

---

◆ कुहचित् = कुत्र चित् । वा ह च । छन्दसि । (पा.सू., 5-3-13) इति सूत्रात् यद्यपि छन्दस्येव किं शब्दस्य सप्तम्यर्थे 'ह' इत्यादेशो विहितः, अथापि ग्रन्थकरस्य परमवैदिकत्वात्, अभ्यासवशात् स्यात् प्रयोगः ।

❖ साधिकारवाक् = वेदवाक्यम् । तत्र वर्तमानं लिङादि विधिप्रत्ययः । तस्य कुत्र शक्तिः? इत्येव भाट्टप्राभाकरयोर्विवादः ।

❋ "ते पुमांसः किम्" इति काकुः ।

◈ विध्यर्थविपये हि विवदन्ते विविधं विद्वांस इति प्रसिद्धमेवैतत् । विशिष्य च प्रकृता मीमांसकाः । मीमांसकेष्वपि प्राभाकराः नियोगवाक्यार्थवादिनः । भाट्टास्तु भावनावाक्यार्थवादिनः । समनन्तरश्लोके एतद्विस्तरो द्रष्टव्यः ।

✹ आर्यपुत्र ! विदग्धजनानां इतस्ततः कर्पणेन बलीयः खलु परिश्रान्तास्मि । परित्रायस्व माम् ।

---

1. शक्तिन - ख
2. मवलब्य - ख

(इत्यञ्जलिं बद्ध्वा प्रणमति)

विधिः - (शक्तेस्तनुं विभाव्य सखेदम्)

[1]नखक्षताद्दुग्धमीवोद्वमत्ते
♦मत्तेभगामिन्यनवद्यमङ्गम् ।
❖अङ्गीचकार भ्रमणनितान्तं
तान्तं करोत्पीडित[2]माल्यसाम्यम् ।। 7 ।।

सखे ! पश्य ।

दन्ताः पुष्पमया यदि स्युरधर[3]श्शक्येत पातुं तदा
पाणिश्चेन्नवनीतखण्डस्थितः स्प्रष्टुं तदास्या वपुः ।
अक्ष्णोरेव निधाय पक्षपिहिता धार्या मयेयं सदा
नानावादिकुतर्ककर्षणवशात्तन्वी परं [4]ताम्यति ।। 8 ।।

---

♦ 'हे मत्तेभगामिनि!' इति संबुद्धिः ।

❖ इदं तु नाटकं प्रबोधचन्द्रोदयसङ्कल्पसूर्योदयादिवत् तत्त्वप्रधानम् । लिङ्-लोट्-तव्यत्-लेट्-प्रत्ययानां विधिरर्थ इति "विधिनिमन्त्रण" इत्यादि सूत्रैरभिहितम् । 'विधि' शब्दस्यार्थः कः? इत्यस्मिन् शास्त्रकाराणां महानस्ति विवादः । लोके तु सामान्यतः विधिश्रवणे पुरुषः प्रवर्तते इति सर्वेषामनुभवसिद्धम् । 'गच्छ' इत्युक्तं हि शृण्वन् पुरुषः गन्तुं प्रवर्तते । अतः 'प्रेरणा विध्यर्थः' इति सामान्यतः लोकतः सिद्धम् । अपौरुषेये वेदे प्रेरकस्य पुरुषस्याभावात् कथं प्रेरणा प्रतीयेत? इति प्रश्ने 'ईश्वरप्रेरणा' इति केचिद्वदन्ति । मीमांसकैस्तु ईश्वरस्यानङ्गीकारात् तथा वक्तुं न शक्यते । वेदः नित्यस्तेषाम् । अतः वेदाख्यशब्दनिष्ठं प्रेरकत्वमिति भाट्टाः वदन्ति। तस्य 'शाब्दीभावना' इति संज्ञा । 'भावना' नाम भावयितृनिष्ठो व्यापारः ।

---

1. नव - ख
2. मूल्य - क
3. शक्येग - ख
4. ताड्यति - ख

**अर्थवादः** - महाराज ! अलं बहुना विषादेन ।

**♦[1]त्वामेव धर्मे कथयन्ति मान-**
**मर्थन्तु वाक्यस्य नियोगमाहुः ।**
**केचिन्महान्तो भुवि, तद्वशात्ते**
**सशक्तिकस्यास्तु सुखं नियोगे ।। 9 ।।**

**विधिः** - (सहर्षम्) वयस्य ! अमात्यचक्रवर्तिना भवता साधु मन्त्रितम् । मम हि तत्रैवाभिरतिः । इतराबाध्यञ्च तत्र ममावस्थानम् ।

---

'भवति' इत्युक्ते 'निष्पद्यते' इत्यर्थो भवति । यथा 'घटो भवति' इत्युक्ते 'घटः निष्पद्यते' इत्यर्थः । प्रतीयते । 'भवति' इत्यत्र धातोः 'सत्ता' इत्यर्थः । सत्ता = निष्पत्तिः इति वत् 'भवनम्' इत्यपि साक्षाद्धातोरर्थः । 'घटः भवति' चेत्, 'कुलालः किं करोति?' इति प्रश्ने, कुलालः उत्पादयति = भावयति = घटो यथा भवेत् तथा करोति । 'भवति' इत्यत्र 'भवनं' चेत् धात्वर्थः, 'भावयति' इत्यत्र 'भावनम्' = 'भावना' धात्वर्थः । भावना नाम = 'यथा भवेत्, तथा साधनमेव । इयमेव भावना लिङर्थ इति भाट्टाः । उक्तरीत्या अस्याः केवललौकिकत्वात्, अलौकिकः अखण्डः कश्चनार्थः "नियोग" पदवाच्य एव लिङर्थ इति प्राभाकराः । ग्रन्थकारस्य प्राभाकरानुयायित्वात्, भाट्टैः विधिशक्तिः नाशिता इत्यभिप्रायेणायं श्लोकः प्रवृत्तः ।

♦ मीमांसकानां क्रियारूपो यागादिरेव धर्मः । तत्र च विधिवाक्यम् "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि प्रमाणम् । अप्राप्तार्थप्रापको हि विधिः । अतस्स एव मुख्यो वेदः । इतरत्सर्वं तच्छेषतया प्रमाणम् । वाक्यस्य = विधिवाक्यस्य अर्थम् = अर्थभूतम् नियोगम् = नियोगरूपम् त्वामेव धर्मे मानं भुवि केचित् महान्तः प्राभाकरादयः महान्तः कथयन्ति । तद्वशात् सशक्तिकस्य ते नियोगे सुखम् आस्त्वित्यन्वयः ।।

---

1. त्वमेव - ख

अये ! दैवभूतेन मन्त्रिणा विश्रान्त्युपायस्साधु वर्णितः । तद् आस्व निश्शङ्कम् ।

शक्तिः - ❖अअउत्त भट्टपाएहिं मह अहिट्ठाणीकअए भावणाए खु मं पडि एव्वं कहिदं । अए ! [1]पहाअर ! [2]कुजुत्तिदो णिओआहिमुहीए तुह महाणिअळबन्धे दिठ्ठी अत्थि गुरुणो अत्माण त्ति । तदो वेवइ मह हिअअं ।

विधिः - वयस्य ! श्रृणोषि? इदं ❋वचनमदूरगामीव मे भाति । किन्तु -

**❖आत्मप्रतिष्ठापगमव्यथाभा-**
**गूचे स्वबुद्ध्या किल भावनैवम् ।**

---

❖ आर्यपुत्र ! भट्टपादैर्मम अधिष्ठानीकृतया भावनया खलु मां प्रत्येवं कथितम् । "अये ! प्रभाकर कुयुक्तितो नियोगाभिमुख्यास्तव महानिगळबन्धे दृष्टिरस्ति गुरोरस्माकम्" इति । ततो वेपते मम हृदयम् ।

❋ वचनम् = उक्तवचनस्यार्थः । विधिशब्दस्य पुल्लिङ्गत्वात्, शक्तिभावनाशब्दयोः स्त्रीलिङ्गत्वात् एवं रूपणम् । भाट्टमते भावनामुख्यविशेष्यकशाब्दबोधः, प्राभाकरमते नियोग एव विधिशक्तेः पर्यवसानात् नियोगमुख्यकशशाब्दबोधः । अतः शक्तिभावनयोः सपत्नीकलहवद्वर्णनम् । तत्र कुमारिलभट्टरक्षणबलेन भावना किञ्चिदिव विजृम्भते । महाराजस्य विधेः पत्नीभूतायाः शक्तेर्वचने - "तव महानिगळबन्धे = बलात्कृत्य बन्धने अस्माकं गुरोः = कुमारिलभट्टस्य दृष्टिरस्ति" इति स्थितेरेवमत्रोक्तिः ।

❖ वाक्यबोधे विधिशक्तेः नियोगे पर्यवसाने, भावनायाः स्थानालाभात्, आत्मनः = स्वस्य प्रतिष्ठायाः = सुस्थितेः अपगमात् या व्यथा, तद्भाक् = व्यथापीडिता भावना खलु केवल स्वबुद्ध्या एवमवदत् इति विधिः स्वमित्रम् अर्थवादं प्रति इदं वदति ।

---

1. पहाधर - ख
2. कुजु - ख

को वा न जानाति विगर्हणीयं
लोके वधूनां कुटिलस्वभावम् ।। 10 ।।

मानिनि ! न तद्यथार्थमिति मन्तुमर्हसि । [1]अस्तु वैवम् । अतिगहनगम्भीरोक्तिगुम्भसुभगम्भावुकाः [2]जयन्ति प्राभाकराः। ततोऽवश्यमेकत्र प्रतिष्ठा भविष्यत्यविनाभूतयोरावयोः ।

(प्रविश्य पटाक्षेपेण ♦सौविदल्लः)

**सौविदल्लः** - (ससम्भ्रमम्) ❖अंब ! पणमेमि । अंवाए भावणाए आदिठ्ठं अज्ञ दाव वसंदळच्छीसव्व जाए मिळिदाहिं सव्वाहिं सहअरीहिं सह विहारुज्ञाणं पडि गंदव्वं अथि । तुहए झति आअंदव्वंति ।

**शक्तिः** - ❋अय्यउत्त ! तह पराहीणाए मह जीवणं । [3]भावणेत्ति णिओऔत्ति जदणोत्ति एव्वं बहुविहा खु मह कढ्ढणे जाअरुआ वट्टंति । का गई?

**विधिः** - (विचिन्त्य) स्वाभिमतसिद्धिपर्यन्तम् एवमेव किल वर्तितव्यम् । किं वृथा बलवद्धि रोधेन !

---

♦ "सौविदल्लाः कञ्चुकिनः" इत्यमरः । (नाट्यवर्गः)

❖ अम्ब ! प्रणमामि । अम्बया भावनया आदिष्टम् । अद्य तावद् वसन्तलक्ष्मीसपर्यायै मिलिताभिः सर्वाभिस्सहचरीभिस्सह विहारोद्यानं प्रति गन्तव्यमस्ति । त्वया झडित्यागन्तव्यमिति ।

❋ आर्यपुत्र ! तथा पराधीनाया मम जीवनम् । भावनेति नियोग इति यत्न इति एवं बहुविधाः खलु मम कर्षणे जागरूका वर्तन्ते । का गतिः?

---

1. अस्तु चैवम् - ख
2. जय ..... - ख
3. भावणेत्ति.... - ख

(सर्वे उद्यानप्रवेशव्याजेन परिक्रामन्ति)

**विधिः** - (उद्यानं निर्वर्ण्य) सखे ! वसन्तारम्भनितान्ताभिरामं मनो मे विवशयति ❖निगमोद्यानम् ।

इह हि -

**कुसुमितवीरुन्मधुलव❖[1]कौक्कुटिकानां द्विरेफ निवहानाम् ।**
**गीतिश्श्रुतिपुटपेया सद्यस्तरलीकरोति मे [2]चेतः ।। 11 ।।**

अपि च -

**❊माकन्दाङ्कुरचर्वणोन्मदपिकग्रीवा[3]निनादच्छलो-**
**दञ्चज्जैत्रकुहालिकाकलकलो दिङ्मण्डलीमाविशन् ।**

---

❖ निगमः = "स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात् पुरम्" इत्यमरः । शाखानगरम्, प्रकृते वेदश्च ।

❖ कौक्कुटिकाः - "स्याद्दाम्भिकः कौक्कुटिकः" (नानार्थवर्गः) इत्यमरः । "गीतिः" इति विशेष्यवाचकपदम् ।

❊ माकन्दः = आम्रविशेषः । आम्रपल्लवभक्षणेन कोकिलाः मधुरं गायन्तीति प्रसिद्धिः । तादृशपिकानां ग्रीवानिनादः = कण्ठध्वनिः । तद्व्याजेन उदञ्चन्, जैत्रकुहलिकायाः = जैत्रकाहलस्य कलकलः = ध्वनिविशेषः । अयमेवात्र कर्ता । कोकिलध्वनिः मन्मनथसैन्यस्य नासीरः = सेनामुखे विद्यमानः वीरभटः = मन्मथः। तस्य शीघ्रागतिम् = अचिरादागमनं व्याचष्टे इत्यन्वयः । कोकिलध्वनिः वसन्तागमनं सूचयतीति भावः ।

---

1. कौकुटिकानाम् - ख
2. चेदः - ख
3. निनादच्चला - ख

**व्याचष्टे [1]पथिकाधिकार्तिचनासाटोपधाटीस्फुर-**
**द्विराग्रे[2]सरपञ्चसायकचमूनासीरशीघ्रागतिम् ।। 12 ।।**

अद्य किल -

**मलयशिखरीशृङ्गादाप[3]तन्तोवसन्तो-**
**द्विदुरकुसुमवाटीसौरभासारभाजः ।**
**विरहिषु विषधारामुद्वमन्तो भ्रमन्ति**
**प्रतिदिशमनुकूलस्पन्दिनो गन्धवाहाः ।। 13 ।।**

(उपसृत्य) सखे ! इयमित एवाभिवर्तते सखीभिस्सह भावना ।

(ततः प्रविशति यथोक्तावस्था भावना)

**भावना** - (परितो विलोक्य) किमद्यापि नागता ✦मन्दा विधिशक्तिः ।

**शक्तिः** - (सत्वरमुपसृत्य) ❖अंब ! आअदम्हि ।

**भावना** - (भ्रुकुटीकुटिलमालोकयन्ती) ❊[अयि ! आश्रितलक्षणं त्वया साधु] ◈पधिधान्यतेदि । पराहीणानां वहूणां एव्वं अनवरतं

---

✦ भावना लौकिकी, अत एव चतुरा । विधिशक्तिस्तु वैदिकी । अतः भावना तां उपहसति 'मन्दा' इति ।

❖ अम्ब । आगतास्मि ।

❊ एतत् आवरणाङ्कितस्य प्राकृतमूलं न दृश्यते ।

◈ परिपाल्यते । पराधीनानां वधूनामेवमनवरतनिजपुरुषमुखावलोकनकुतूहलं न युज्यते । गृहाण तावद्धस्तमुद्यानपर्य्यन्तम् ।

---

1. पथिकालिकार्ति - ख
2. सस - ख
3. पसन्तो - ख

निजपुरुषमुखावलोअणकुदूहळं न बुज्यते । हंहाण ताव[1]द्धस्त-मुज्झाणपडियुंसुलम् ।

शक्तिः - ♦जं आणवेदि होदि । (इति तथा करोति)

विधिः - (सखेदमात्मगतम्)

**❖अहं महाराजपदाभिषिक्त-**
**श्शक्तिर्ममैषा महिषी प्रसिद्धा ।**
**आवां पुनर्लौकिकभावनायाः**
**वशे स्व इत्येतदहो ! असह्यम् ।। 14 ।।**

तत् कदा तावदलौकिककार्य एव नियतस्थितिरावयो[2]र्घटेत । ❋इयं हि [3]मनाग्गौरववशान्मा[4]माक्षेप्तुमप्रगल्भमाना मदविना-भूतां शक्तिमाक्षिपत्याश्रयताधिकार[5]गर्विता भावना । वस्तुतस्तु मामपि स्पृशत्येष आक्षेपोऽविनाभावात् । (प्रकाशम्) अयि भावने ! कृतं संरंभेण । प्रविश्यतां तावदुद्यानम् ।

---

♦ यदाज्ञापयति भवती ।

❖ विधिर्हि नायकोऽत्र नाटके । विधेश्शक्तिः कुत्रेऽपि विवादे नवीनेयं भावना प्रवलाश्रयगर्विता मां भर्त्सितुमसमर्था मम पत्नीं शक्तिं भर्त्सयति किल ! इति शोचति विधिः ।

❋ बलवतश्शत्रोः पक्षे पराक्रमाः लोकरीतिः । अत एव "मामपि स्पृशत्येव आक्षेपः" इति वदति विधिर्महाराजः ।

---

1. द्धस्त .... ज्ञण - ख
2. घटते - ख
3. गौरव - ख
4. मक्षेप्तु - ख
5. मर्विक - ख

(सर्वे उद्यानप्रवेशमभिनयन्ति)

**विधिः** - वयस्यार्थवाद ! तावदावामिमं मालती निकुञ्जमाश्रयावः, यावद्वसन्तलक्ष्मीसपर्याभिस्समाप्यते ।

(इति तन्निकुञ्ज उपविशतः)

**भावना** - ♦हळा प्रिअसखि ! इदाणीं वसन्तलक्ष्मी सवय्यायै पुंप्फावचणं कच्चणिव्याम ।

**सर्वाः** - ❖तहा । (इति पुष्पापचयं नाटयन्ति)

**विधिः** - (सानुरागम्, स्वगतम्)

**पश्चात् किञ्चिन्न्यञ्चयन्ती मुखाब्जं**
**मन्दं मन्दं लीलयोत्क्षिप्तबाहुः ।**
**तिष्ठन्तीयं हन्त ! पादाञ्चलाभ्या-**
**[1]मालोलाक्षी मञ्जरीमाच्छिनत्ति ।। 15 ।।**

अपि च -

**आकृष्यमाणात् प्रसवात् पतद्भी-**
**रजोभिरुद्धूलित❋[2]गण्डभित्ति ।**
**मुखं मनाक् स्विन्नमिदं तरुण्या-**
**रसद्यो ◈बताकर्षति मानसं मे ।। 16 ।।**

---

♦ हला प्रियसख्यः ! इदानीं वसन्तलक्ष्मी सपर्यायै पुष्पापचयः कर्तव्यः ।

❖ तथा ।

❋ गण्डभित्तिः = विशालकपोलम् - 'मुखम्' इति विशेष्यम् ।

◈ वत इति स्थाने 'त'कारः लुप्तः 'ख' मातृकायाम् ।

---

1. मालोलाक्षीः - ख
2. गन्धभित्ति - ख

किञ्च -

उत्क्षिप्यमाणनिजबाहुलतासहोद्य-
❖त्कूर्पासदेशदरलक्ष्यकुचा मृगाक्षी ।
❖दूरे स्थितस्य मम सा मनसा सहैव
संप्रत्यहो ! सुमनसां ग्रहणं करोति ।। 17 ।।

अन्यच्च -

तन्व्यास्सन्निहिते मुखे सरभसं [1]शब्दायमानोऽपत-
द्भृङ्गः कोऽपि कुतूहलेन तरळस्त्यक्त्वा नवां मञ्जरीम् ।
❋तत्रालोक्य तु नासिकां निरगमत् सैषा तदेतद्द्वयं
दृष्ट्वा मामवलोक्य [2]च स्मितमुखी सद्यो [3]मनाक्
लज्जते ।। 18 ।।

(प्रकाशम्)

वयस्य ! पश्य विलासिनीनां पुष्पापचयसम्भ्रमम् ।

ससंरम्भोत्क्षिप्तो[4]त्तरलभुजमुन्नम्रवदनं
ग्रहीतुं पुष्पाणि द्रुतमुपनतं यौवनमिदम् ।

---

❖ कूर्पासः चोलः । स्त्रीणां स्नानपिधानकं स्यूतं वस्त्रम् ।

❖ दूरे स्थितस्य मम मनसा सहैव सुमनसां ग्रहणं करोति इत्यन्वयः ।

❋ कोऽपि भृङ्गः शब्दायमानः तन्व्याः मुखे सरभसं अपतत्, कमलभ्रान्त्येति भावः । परन्तु तत्र मुखे नासिकम् आलोक्य निरगमत्, केसराणामभावादिति भावः । तदेतत् द्वयम् = मुखे पतनम्, केसरालाभेन निर्गमनं येति द्वयम् ।

---

1. शब्दायमानोत्पत - ख
2. सस्मित - ख
3. मनोग् - ख
4. तरलयि x मुन्न - ख

करस्पर्शभ्रश्यत्परिणतरजः पातकपटात्
सलीलं पिष्टातैर्मुहु[1]रवकिरन्तीव लतिकाः ।। 19 ।।

अहो केवललौकिकतया भृशपरिशीलितमायाप्रपञ्चाया भावनाया विलसितमिदमस्मन्मनः [2]प्रतारणैकफलकम् । (या खल्वस्माक-♦माश्रयान्तर❖प्रवृत्ति[3]चिन्तामस्मिन् प्रपञ्चेऽस्मानपातयत् ।) नेतः क्षिप्रमपसर्तुमर्हामः । पश्य -

लतागृहवितानवद्विकचमञ्जरीभारभा-
गनोकहमनोहरं मम [3]मनोऽकरोदाकुलम् ।
सुगन्धभरबन्धुराकठिनगन्धवाहावृतं
विकस्वरपिकस्वरं सुकृत[4]लभ्यमेतद्वनम् ।। 20 ।।

अपि च -

प्राप्तो दैववशाद्वसन्तसमयस्तत्रापि केळीवनं
दृष्टं सम्यगवेक्ष्यते प्रियतमाश्रृङ्गारलीलाक्रमः ।
वातो वाति शनैश्शनैर्मधुलिहो गुञ्जन्ति [5]मुञ्जुस्वनं
सामाग्री मदनस्य सेयमखिला लोकेन कं लोलयेत् ।। 21।।

---

♦ आश्रयान्तरम् - भावनां परित्यज्य नियोगपक्षपातित्वम् । तत्र प्रवृत्तिचिन्ता-भावनया ज्ञातेति तात्पर्यम् ।

❖ उभयोरपि मातृकयोः 'प्रवत्तिः' इति पाठः दृश्यते । तत्र अर्थः न सङ्गच्छते । अतः 'प्रवत्ति' इति किञ्चिद्विपरिवर्तितम् ।

---

1. ..... वकिरन्तीव - ख
2. प्रतारणैक ..... - ख
3. प्रवत्ति - ख
3. मलो - ख
4. वभ्य - ख
5. मञ्जुस्वरं - ख

(पुनश्शक्तिं निर्वर्ण्य)

किञ्चित्कुञ्चितचञ्चके दिशि दिशि व्यापारयन्ती दृशा-
वुन्मीलत्पुळकाङ्कुरं कुचतटं स्वं दर्शयन्ती मनाक् ।
तन्वङ्गी निभृतोज्वलन्मणिमिळत्तांटङ्करोचिश्छटा-
गाढालिङ्गितगण्डभितिरसकृच्चेतो ममाकर्षति ।। 22 ।।

(पश्चिमां दिशमालोक्य)

हन्त ! चरमगिरिश्शृङ्गमालिङ्गति भगवान् सहस्रभानुः ।

(प्राचीमालोक्य) इतश्चोदयाचलमेखलामखण्डपद्मरागमणिनिभेन मण्डयति निजमण्डलेन राकानिशाकरः । ♦कटकट ! ऋत्विग्भ्यो निवेदितस्वयज्ञसमाप्तिकस्सर्वस्वारयाजीव चन्द्रतारकन्यस्तस्वसाध्य-[1]भुवनप्रकाशनभरोऽस्तमेति गभस्तिमाली ।

(पुनः प्राचीमवलोक्य)

अद्योदयक्षितिधरेन्द्रशिखावतंसः
पूर्णेन्दुरन्धतमसोत्कर[2]घस्मरोऽयम् ।
आभात्यमर्त्यपुरवारवधूसलील-
होळाक[3]कुङ्कुमरसैरिव पृक्तबिम्बः ।। 23 ।।

(मुहूर्तादुपरि पुनर्विभाव्य)

---

♦ सूर्यस्यास्तमयं निरीक्ष्य सन्तोषसूचकध्वनिरयम् ।

---

1. लवन - ख
2. घस्मरोधम् - ख
3. कुङ्कु ..... रसै - ख

अये निरस्तलौहित्योपरागः स्फटिकफलकवदम्बर[1]तलमालम्बते चन्द्रबिम्बः ।

अद्य तु -

[2]सोत्कण्ठाभिपतच्चकोरनिवहक्षुत्क्षेपणं ध्वान्तविद्-
ध्वंसं [3]कैरविणी[4]विकासमखिलप्राप्योघनेत्रोत्सवम् ।
कुर्वाणो युगपत्तिलोकविजयप्रस्थानकेलीजुषः
कन्दर्पस्य किलायमुच्छ्रितसितच्छत्रायते चन्द्रमाः ।।24।।

(शक्तौ दृष्टिं दत्वा, स्वगतम्)

एषा हि पुष्पापचयप्रसक्त-
श्रमापनोदाय तरूपकण्ठे ।
चन्द्रातपं सेवितुमाशु मुग्धा
विस्रम्भतः कञ्चुकमुज्झहाति ।। 25 ।।

(सोत्कण्ठातिशयं निर्वर्ण्य)

निचोळवन्धाद्दरलीनचूचुके
निबद्धरोमाञ्च उरोजमण्डले ।
[5]श्रमोदितान् पाणितलेन लोलदृङ्-
मुहुर्मुहुः स्वेदलवानपास्यति ।। 26 ।।

---

1. तर - ख
2. सोत्कर्णा - ख
3. कैरवणी - क
4. विकास - ख
5. श्रमोदितां - ख

तदिदानीं मकरध्वजानुशासनवंशंवदस्त्वरतेऽन्तरात्मा । (प्रकाशम्) सखेऽर्थवाद ! कुसुमापचयभृशपरिश्रान्तां प्रेयसीं क्षणमाश्वासयामि यथोचितम् ।

(परिक्रम्य निष्क्रान्तास्सर्वे)

इति श्रीशैलकुलपारावारपारिजातस्य प्राभाकरमहासमुद्र-
कूलङ्कषधिषणस्य तातपादपादपद्मपरिचर्यालब्धसकल-
सारस्वतसमुदयस्य विद्वत् कविराजपट्टभद्र विरुद-
समाख्याविख्यातस्य प्राभाकरवेङ्कटाचार्यतनयस्य
श्रीनिवासाचार्यवर्यस्य कृतिषु प्रौढाभिरामे
प्रथमोऽङ्कः

## द्वितीयोऽङ्कः

(ततः प्रविशति ♦पार्थसारथिर्न्नाम भट्टाचार्यशिष्यः,
प्रभाकरान्तेवासी शालिकानाथश्च)

**पार्थसारथिः** - (विहस्य) सखे शालिकानाथ ! पश्य । क्षणिकतया क्रियाः कालान्तरभाविफलमापादयितुमक्षमा इति जगदुपकारिभिर्भट्टपादैर्द्वारमात्रतद्यानु[1]गृहीतम् - पूर्वम् अधुना[2]भिधेयताधिकारे वर्तमानं हि सत्यापयति तावदिमां लोकवार्ताम् ।

**योऽश्वस्य ग्रहणे राज्ञा चोदितो राजसेवकः ।**
**स वहत्यवलेपन ❖मन्दुराधिपतां स्वयम् ।। 1 ।।**

इति ।

तेन हि लोकानवगतस्यात्मनः कल्पनैव परमानुग्रह इति [3]यथावदेव स्थातव्यम् । धिगलौकिकानां दुश्चेष्टितम् । अपि लौकिकी भावना परमसाध्वीयमाचार्यमतदृढीकरणाय स्वयं बद्धकङ्कणा वर्तते ।

---

♦ कुमारलभट्टानुयायी अयं शास्त्रदीपिकाद्यनेकप्रौढप्रबन्धनिर्माता, प्रायः क्रैस्तदशमशतकीयः । शालिकनाथश्च प्राभाकरानुयायी, प्रकरणपश्चिकाख्यग्रन्थकर्ता, किञ्चिदिव प्राचीनः । नाटककर्त्रा तु नाटकपोषणाय समानकालिकत्वेन कल्पितः।

❖ मन्दुरा = अश्वशाला ।

---

1. ग्रहीतः - ख
2. भि .... ता - ख
3. यदाव - ख

**शालिकानाथः - (सस्मितम्) इदन्तु यथार्थम् । ततस्ततः ।**

**पार्थसारथिः - आचार्यदत्तमधिकारमशङ्कमेव**
**मत्वान्यतः कतिपयैरपि नीयमानाम् ।**
**शक्तिं विधेः पटुतरा बत ! भावनेयं**
**भूयोऽपि कर्षति हि पाणिगृहीतवेणी ।। 2 ।।**

**शालिकानाथः - (सामर्षम्) सखे पार्थसारथे ! शारीरकमीमांसाध्ययने सतीर्थ्यो भवानिति श्रुतं मयैतावत् । नेतः परं सोढुमर्हामि ।**

**पार्थसारथिः - (सगर्वम्) किं त्वदसहनेन भावनाभिधेयतायाः च्युतिर्भविष्यति?**

**शालिकानाथः - (सावलेपोत्कर्षम्) कियदेतत्? तर्हि श्रूयताम् । गुरुचरणौ स्मरता मया किञ्चिदुपक्षिप्यते ।**

**अपौरुषेयस्य हि पौरुषेया-**
**द्वाक्यस्य वाक्यान्न [1]घटेत भेदः ।**
**अर्थाविशेषे सति वैदिकस्य**
**शब्दस्य शक्तिस्तदलौकिकेऽर्थे ।। 3 ।।**

**पार्थसारथिः - आग्न्यादयोऽर्थाः खलु लोकसिद्धाः**
**वेदस्तदंशे तु भवेदवेदः ।**
**अत[2]स्त्वयोक्तं सुतरामयुक्तं**
**लिङाभिधेया ननु भावनैव ।। 4 ।।**

---

1. घटते - ख
2. स्त्वयोत्तं - ख

शालिकानाथः - अग्न्यादयस्तावदलौकिकार्थाः
♦अलौकिकार्थान्विततावशेन ।
लिङ् वक्ति लोकाविदितं नियोगं
तदन्विता अन्यपदाभिधेयाः ।। 5 ।।

पार्थसारथिः - ❖उच्छिद्यते सर्वपदार्थनिष्ठं
[1]तल्लौकिकत्वं ननु तर्हि लोके ।
वेदाभिधेया बहवोऽनलाद्याः
प्रायेण लोकावगताः किलार्थाः ।। 6 ।।

शालिकानाथः - अलौकिका ये ननु तावदर्थाः
अलौकिकार्थान्विततावशेन ।
✻स्वरूपतस्सन्तु च लौकिकास्ते
निमित्तभेदाद्व्यवहारभेदः ।। 7 ।।

अत एव "य एव लौकिकास्त एव वैदिकाः" इत्यामनन्ति विशेषविदः । तदास्तां तावल्लोकावगतायाः कृतेर्भावनाया वा विधि-

♦ यद्यपि अग्निलौकिकः, चक्षुपा दृश्यमानत्वात् । अथापि मन्त्रादिना स अलौकिको भवति । अत एव "लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः" इत्याद्यपि न विरुध्यत इत्यर्थः ।

❖ लोकसम्बन्धी लौकिकः । अस्माभिरुच्चार्यमाणाः लिङादयः लोकावगताः कथमलौकिका भवेयुः इति भाट्टपक्षाभिप्रायः । लोकवेदाधिकरणन्यायेन अग्न्यादयः शब्दाः लौकिका एव । तत्र, मन्त्रादिना संस्कार आधीयते । संस्कारस्त्वलौकिकः, न तु अग्न्यादिपदानि, तदर्था वा ।

✻ स्वरूपतो लौकिकास्सन्तोऽपि विशिष्टवेपेणालौकिका अपि भवन्तु, को विरोध इति प्राभाकराणामाशयः ।

1. तलौकिकत्वां - ख

वाच्यता । अनेनैव गूढाभि[1]सन्धिभिः तत्रभवद्भिर्गुरुचरणैरलौकिककार्ये लिङ्शक्तिमभ्युपेत्य, तत्समभिव्याहृतपदान्तराणां साक्षात् परम्परया वा [2]तदन्वितेषु ❖तदन्वितत्वाकारेणालौकिकीकृतेष्वर्थेषु शक्तिं निश्चित्य चतुर्विधस्य वेदस्यापौरुषेयता सुरक्षिता।

(निष्क्रान्तौ)

**शुद्धविष्कम्भः**

(ततः प्रविशति सशक्तिको विधिः अर्थवादश्च)

**विधिः** - सखेऽर्थवाद ! बहूपकृतं किल विपश्चिता प्रभाकरेण । ❖[3]यदयमात्मान्तेवासिमुखेन मच्छक्तेर्नियोगमेव दृढाधिष्ठानं कृतवानिती[4]तस्ततः श्रूयते । तदहं बलवदाश्रयलाभेन, [5]धृतिमवलम्ब्य निरस्य भावना मित आगतोऽस्मि । सुमुहूर्ते तावन्नियोगमधितिष्ठतु मे सहचरी शक्तिः । क्वास्ते स नियोगः ।

(प्रविश्य नियोगः)

**नियोगः** - एषोऽस्मि । अलौकिककार्ये [6]मय्येव शक्तिरध्यवसिता तत्र भवता प्रभाकरेण ।

---

❖ "तदन्वित्वाकारेण" इत्ययं शब्दः अनुपदमुक्तमर्थं स्पष्टयति ।

❖ अयम् = प्रभाकरः आत्मनः = स्वस्य अन्तेवासिमुखेन = शिष्यस्य नियोगस्य द्वारा ।

---

1. सान्धिना - ख
2. तदन्वितेव - ख
3. ..... न्तेवासि - ख
4. तरस्यतः - ख
5. धृति .... रस्य - ख
6. मय्येव भवता - ख

(प्रविश्य पटाक्षेपेण ♦कृतिस्वर्गाभ्या-
मनुगम्यमाना भावना)

**भावना** - भो नियोग ! यदुक्तं भवता मय्येव भवतश्शक्तिरध्यवसितेति, तत् कथम्?

❖**नियोगः** - (सरोषम्, भ्रुकुटिकुटिलमालोकयन्) भावने ! इतः पश्य । करतल एवानवरतं धार्यमाणयानया स्वर्गद्वारकवाटोद्घाटनकुञ्चिकयैव ताडयामि त्वामपसर । कृतं बहुविकत्थनैः ।

**भावना** - (मनागपसृत्य) युक्तियुक्तया वाचैव ताडय । किं कुञ्चिकयानभिज्ञवञ्चिकया?

**नियोगः** - (सोपहासम्) विसृज तावत् प्रथमतस्त्वद्युक्तिभिस्त्रिकाग्रन्थिम् ।

**भावना** - (श्रूयतां तर्हि)

**❋अलौकिकत्वोपरि कार्यता ते**
**हेतुस्मये तद्वद कीदृशं मे ।**
**यद्येव लोकाविदितत्वमेतत्**
**सामान्यतस्त्वामिह को न [1]वेति ।। 8 ।।**

---

♦ कृतिः = यागादिविषयिणी । यागाद्याचरणजन्यः खलु स्वर्गादिः । अतस्तयोः स्वसाक्षित्वेन सहानयनं भावनया ।

❖ गुरुमते लिङर्थो नियोगः वेदस्य पोषकत्वात् पत्रत्वेन कल्पितः । नियोग एव लौकिकः स्वर्गहेतुरेतन्मते ।

❋ नियोगः अलौकिकोऽपि यागेन जन्यत इत्युच्यते । जन्यत्वेन लौकिकत्वमावश्यकम् । तर्हि लोकतः तत् कुतो न ज्ञायते? इत्याक्षेपः ।

---

1. वेक्ति - ख

यदि लोकादृष्टत्वम् [1]तत्तर्ह्यस्त्येतदीदृशं द्वितीयम् । कार्यञ्चेदं भवति त्वय्येव कथं विधेश्शक्तिः ।

**नियोगः** - अप्रगल्भे भावने ! श्रुणु तर्हि दर्शनरहस्यम् ।

**[♦]यदनश्वरमिह लोकादृष्टं हेतुर्भविष्य[2]तोऽर्थस्य ।**
**तदिदमलौकिककार्यं तत्सम्बन्धादलौकिकोऽन्योर्थः ।। 9 ।।**

**भावना** - (विचिन्त्य) जितं भवता ।

**नियोगः** - नेतःपरं विधिशक्तिं स्प्रष्टुमर्हसि । तदिमानि भट्टपादकरुणैकमूलानि दुर्भराणि जैत्रचिह्नानि महाराजस्य विधेरुपकण्ठे न्यस्यन्ताम् ।

(भावना तथा कृत्वानुप्रविष्टाभ्यान्निष्क्रान्ता)

**विधिः** - ([3]सहर्षोत्कर्षम्) सखेऽर्थवाद !

**षष्ठादिमनयन्यायमूलाभिर्गुरुयुक्तिभिः ।**
**अलौकिकस्थायिकार्ये निश्चिताद्य स्थितिर्मम ।। 10 ।।**

[4]नियोग ! स्वस्थाने सुखमास्व ।

---

♦ हेतुभिः = यागादिभिः भविष्यतः = उत्पद्यमानस्यापि अर्थस्य = नियोगाख्यस्य पदार्थस्य अनश्वरम् = नित्यम्, अत एव तदिदं कार्यम् अलौकिकं भवति । एतादृशालौकिककार्यत्वसम्बन्धात् नियोगोऽपि अलौकिको भवति । तथा च नियोगस्य कार्यत्वम् = जन्यत्वरूपं न, किन्तु अभिव्यक्तिरूपम् । अतः "कार्य वाक्यार्थवादः अयम्" इत्यपि व्यवहरन्ति । परन्त्विदं कार्यत्वम् लौकिकमिति न भ्रमितव्यमित्याशयः । अस्यार्थस्य न्याय्यत्वात्, "जितं भवता" इत्यनुपदम् अङ्गीकारः ।

---

1. तत्तस्या - ख
2. तार्थस्य - ख
3. ..... त्कर्पम् - ख
4. .... स्वस्थाने - ख

**नियोगः** - तथा । (इति निष्क्रान्तः इङ्गितं बुध्वार्थवादश्च)

[1]**विधिः** - देवि ! नेतः परं ♦तरलीभवितुमर्हसि । एहि सुमेरुश्रृङ्गो-
पवनवाटिकासु निश्शङ्कं विहरेव ।

(इति सुमेरुप्रवेशव्याजेन परि[2]क्रामतः)

**विधिः** - (पुरो विभाव्य) देवि ! पश्य ।

**माहेन्द्राश्ममयं सुरावनिभृतः श्रृङ्गं महद्दक्षिणं**
**सर्वत्रोज्वलनव्यकाञ्चनलताकुञ्जप्रियं भावुकम् ।**
**❖खेलद्भर्ममरालमण्डितसरः श्रेणीविराजत्तटं**
**निश्शङ्कं सततं सुपर्वमिधुनान्यस्मिन् रमन्ते सुखम् ।। 11।।**

नूनं ✲नियोगोपरागप्रभावादेव सद्यस्सुमेरुदर्शनमावयोरासीत् ।
इत्थं किलोपश्लोकयन्ति लोके सत्सङ्गतिम् ।

**धर्मे मतिं दिशति पापमपाकरोति**
**प्रागल्भ्यमावहति योजयतीह कीर्त्या ।**
**आनन्दमाकलयति स्वयमेधमाना**
**सत्सङ्गतिस्सकलसम्पदमातनोति ।। 12 ।।**

इति श्लाघनीयमेतत् ।

---

♦ तरुलता = कातरता = भीरुता ।

❖ भर्म = स्वर्णम् । "स्वर्णं सुवर्णं .... भर्मकर्बुरम्" इत्यमरः (2, वैश्यवर्गे) मरालाः = हंसाः ।

✲ नियोगस्यालौकिकस्य उपरागादेव = सम्बन्धादेव ।

---

1. .... देवी - ख
2. क्रामति - ख

(पुनः परिक्रम्यावलोक्य च)

कुट्टाकोन्मुखवत्स्थितस्तनतटारूढप्रवाळान्तराः
तन्व्यास्फालनविभ्रमक्रमचलन्मुग्धाङ्गुलीश्रेणयः ।
मन्दारप्रसवाभिरामकवरीप्रान्तभ्रमद्वम्भराः
अङ्कन्यस्तविपञ्चिका इह किलोद्गायन्ति सिद्धाङ्गनाः ।। 13।।

अपि च -

वीरायितश्रमभरान्मुहुरेधमान-
खेदाम्बुसिक्तसिचयप्रति[1]विम्बिताङ्ग्यः ।
म्लाना इव व्रततयः श्लथमौलयोऽत्र
स्वस्वप्रियोपरि कुरङ्गदृशः स्वपन्ति ।। 14 ।।

क्वचित्तु -

रतिश्रमं वारयितुं सुशीतं
छायातरुप्रान्तमुपेत्य सद्यः ।
स्वस्वप्रियैः काश्चन मोदमानाः
कुर्वन्ति डोलामिह चञ्चलाक्ष्यः ।। 15 ।।

ततश्च -

इह रतिसुखमावां निर्विशेव प्रकामं
स्फुटकुटजनिकुञ्जेष्वद्य चक्षुःप्रियेषु ।
[2]अयि चकितकुरङ्गीलोचने ! लीलया द्राङ्
मुखरय [3]मणिश्रृङ्गं मञ्जुमञ्जीरनादैः ।। 16 ।।

1. विम्बिताभ्यः - ख
2. अधि - ख
3. गिरिश्रृङ्गं - ख

(उभौ सुमेरुशृङ्गारोहणं नाटयतः)

**विधिः** - अये ! प्रतिक्षण प्रसृमरमन्दगन्धवहबन्धुरमन्दारप्रमुख ♦ बृन्दारकतरुतलशोभमानमञ्जुळनिकुञ्जततिरमणीयतटममरगिरिकटकमारूढमेव ।

(आघ्राणमभिनीय)

अहो प्रशस्तनिस्तुलकस्तूरीकुङ्कुम[1]सङ्कलितसुरयुवतीकुचतटीपटीरसौरभभराभिरामस्समीरकिशोर ❖ इत आटिकते ।

(श्रुतिमभिनीय)

हन्त ! वसन्तविश्रान्तपरभृतवितति प्रपञ्चितपञ्चमनिर्विशेष-❋[2]विपञ्चिकास्वरमिळितललितकिन्नरयुवतिगीतिरीतिरानन्दयति मे कर्णयुगळम् ।

(पुनः परिक्रम्य)

इदं किल विकसितपङ्केरुहातपत्रच्छायानिविडविसच्छदशयितसितच्छदमिधुनमधुना विधुनोति मम श्रममतिमनोहरं बत ! सरोवरम्। इदं हि सद्यः ◈प्रफुल्लमल्लिकामतल्लिकानिबरीसितकबरीभरनिलिम्पनितम्बिनीकुरुम्बहृद्यमुद्यानमुद्दीपयति मनसि मम कुटिल-

---

♦ वृन्दारकतरुः = देववृक्षः = कल्पवृक्षः ।

❖ समरिकिशोरः = मन्दानिलः । आटीकते आगच्छति । अटगतौ ।

❋ विपञ्चिका = वीणा

◈ प्रफुल्लानां मल्लिकामतल्लिकानाम् = उत्तम मल्लिकानाम् । "मतल्लिका मचर्चिका ....." प्रशस्तवाचकानि" इत्यमरः ।

---

1. सं .... युवती - ख
2. विपाश्चता - ख

तर♦मसम[1]शरम् । अथममन्दमरन्दतुन्दिलरसालकिसलयचर्वण-गर्वितकुहूकण्ठकुलगळ[2]काहळिकाकलकलस्सूचयति मकरकेतन-विजयधाटीम् ।

शक्तिः - (स्वयं विभाव्य सहर्षं विस्मयन्) ❖अंह्महे अणवरदंणुण्णपरि-रंभणसंभमलाहिल्लदिव्वमिहुणणिवह णिविढीकअळदा कुडीरं सुमेरुसिहरं । अंअउत्त एंवं विहाणाणुहावसाळिणीणं एदाणं णिअंविणीमअंळ्ळिआणं मज्झे ठाढुंदुं ळज्जइ मह माणसं ।

(इति मतिं मनाग्गलयति)❋

विधिः - मुग्धे ! मा व्रीडेः ।

वक्षोजद्वयमेव तावकमिदं क्रीणीत हेमाचलं
मुग्धापाङ्गतरङ्गितं तरलयेत् सद्यंस्त्रिलोकीमपि ।
सौन्दर्यं वदनस्य नैव गणयेत् साक्षान्मृडानीमपि
त्वत्तो रूपवती भविष्यति यदि स्याद्वा न वा नाद्य तु◈ ।।
।। 17 ।।

अपि च -

इमाः पुनस्सन्तु नितान्तदूरत-
स्त्रिविष्टपोत्कृष्टतराश्चलभ्रुवः ।

---

♦ असमशरः = मन्मथः ।

❖ अहो अनवरतान्योन्यपरिरम्भणसम्भ्रमाभिलाषुकदिव्यमिथुननिवहनिबिडीकृत-लताकुटीरं सुमेरुशिखरम् । आर्यपुत्र ! एवं विधानुभावशालिनीनामेतासां नितम्बिनी मतल्लिकानां मध्ये स्थातुं लज्जते मम मानसम् ।

❋ गलयति गमनं कुण्ठयतीत्यर्थः ।

◈ आगामिकाले स्यादपि, अद्य तु न - इत्यर्थः ।

---

1. शयः - ख
2. कुहासिका - ख

शरन्मृगाङ्कद्युतिदर्पहारिणः
❖[1]सितद्युतेर्हन्ति न षोडशीं कळाम् ।। 18 ।।

**शक्तिः** - (सङ्कोचमभिनीय) ❖अअउत्त ! अत्तजणाहिमाणेण एव्वं कहेदि भवम् । अहं वुण किअदी ।

**विधिः** - देवि ! झडति पुरोदृश्यमानमिन्द्रनीलशिलातलमणिमण्टपमाश्रयेव।

(उभौ सत्वरं पुनः परिक्रामतः)

**विधिः** - देवि ! पश्य । प्रत्यङ्गणडोलायमानकाञ्चनपञ्जरसञ्चरदभिनव-❊गरुडाश्ममयकेळीशुकनिकरसुभाषितदत्तादरमत्तकाशिनीतनुच्छाया-द्विगुणितस्त्रैणमिह मणिमण्टपम् । तत्परिसर एव सलीलचङ्क्र-मणलोचनासेचनकराजतराजहंसकुलपरिवृतजाम्बूनदाम्बोरुहषण्डमण्डित-मिदं सरोवरम् । श्रुणु तावन्निजवदनकमलसौरभलोभचञ्चल-चञ्चरीक(रि)च्छोळिकानिवारणसत्वरवधूकरविधूननप्रतिक्षणझ-णत्कारिमणिकङ्कणमञ्जुशिञ्जितानि ।

इतः पश्य । अभिनवमृगमदमिळितकुङ्कुमरसपिचण्डिलहिरण्म-यजलयन्त्रविलसितकरकमलयौवतलीलाहोळाकसम्भ्रमम् ।

इतश्च पश्य ।

एताः काश्चन [2]गण्डभित्तिकलितह्रीवेरमुग्धाननाः
लीलाकीरकिशोरमण्डितकराः कर्णाटवेषोज्ज्वलाः ।

---

❖ सितद्युतिः = चन्द्रः ।

❖ आर्यपुत्र ! आत्मज्ञानाभिमानेन एवं कथयति भवान् । अहं पुनः कीयती ।

❊ गरुडाश्म = मरकतरत्नम् ।

---

1. स्मितद्युते - ख
2. गन्धभित्ति - ख

नीलस्निग्धघनैर्नितम्बनिकटव्याप्तैः कचग्रन्थिभि-
र्दिव्या नव्यमृणाळकोमलभुजा दीव्यन्ति सौधेऽङ्गनाः ।। 19।।

शक्तिः - (पुरोऽवलोक्य साश्चर्यम्) ❖अंअउत्त ! पेख्ख । सरसीतडादो इदो एव्व अहिट्टइ कोवि मरअअमओ केळीसुओ ।

(प्रविश्य शुकः शक्तेः करोपरि स्थित्वा प्रणाममभिनयति)

शक्तिः - (सप्रेमभरम्) ❖अंह्महे ! अदिणि वुणो खु एसो दिव्व सुओ !
(इति शुकं कराभ्यामुरसि निवेशयन्ती लालयति)

विधिः - अद्य किलास्मच्छृङ्गारलक्ष्मी ललाटतटमनेन तिलकितं केळीशुकेन। एवमेव विधिस्सर्वत्रास्माकमनुकूलो भवतु । सुखमिहैव निवसतिरावयोर्युज्यते ।

(निष्क्रान्तास्सर्वे)

इति श्रीशैलकुलपारावारपारिजातस्य प्राभाकरमहासमुद्र-
कूलङ्कषधिषणस्य तातपादपादपद्मपरिचर्यालब्धसकल-
सारस्वतसमुदयस्य विद्वत् कविराजपट्टभद्र बिरुद-
समाख्याविख्यातस्य प्राभाकरवेङ्कटाचार्यतनयस्य
श्रीनिवासाचार्यवर्यस्य कृतिषु प्रौढाभिरामे
द्वितीयोऽङ्कः

---

❖ आर्यपुत्र ! पश्य सरसीतटादित एवाभिवर्तते कोऽपि मरकतमयः केळीशुकः ।

❖ अहो अतिनिपुणः खल्वेपु दिव्यशुकः ।

# तृतीयोऽङ्कः

(नेपथ्ये)

आचार्यचरणाः प्रत्यासीदन्ति । निषेदिवद्भिर्ज्ञैर्जागरुकैर्भवितव्यम् ।

(ततः प्रविशति सच्छात्रस्तत्रभवान्, भट्टाचार्यः)

**भट्टाचार्यः** - कोऽत्र भोः !

**♦भानुदेवः** - (उपसृत्य) एष [1]भानुदेवनामाहमन्तेवास्यभिवादये । [2]भट्टाचार्यः ! आयुष्मानेधि । किमरे ! स्वभावजडा भावनेव यूयञ्च मन्दाः स्थ । या खलु विधिशक्ति❖मितरवशे सर्वथा मा कृथा [3]इत्यति बहुविधजैत्रचिह्नविश्राणन [4]पूर्वणमसकृदादिष्टाप्यभिधेयताचोरेणापूर्वेण चर्वितगर्वसर्वस्वा न दृश्यते । अतो युष्माकं ❋शिष्यभावप्रकटनस्यायमवसरः । किञ्चिदपकारमुखेन हि प्रधानशेषत्वमङ्गानाम् । (सवैलक्ष्यम्)

---

♦ कर्ता भानुदेवः यद्यपि कुमारिलभट्टादत्यन्तमर्वाचीनः अथापि कुमारिलानुयायित्वात्, तच्छिष्यत्वेन कविनात्र कल्पितः ।

❖ इतरवशे = नियोगवशे ।

❋ मदीयसिद्धान्तरक्षणेन शिष्यभावः प्रकटनीय इत्याशयः ।

---

1. भानुदेवे - ख
2. भानुदेवः - ख
3. इत्यति - क
4. पूर्वेण - ख

पश्य -

**यागेन ♦भावयेत् स्वर्गमिति स्वरसपूर्वकम् ।**

**वाक्यार्थत्वं भावनाया वाध्यते हि कुयुक्तिभिः ।। 1 ।।**

हन्त ! ❖शिष्य एवास्माकं प्रभाकरः प्रतीपगामी संवृत्तः । बलवदुत्पथप्रवृत्तोऽयम् । प्रथमे लक्षणे सप्रकारं चोदनाप्रामाण्यमध्यायार्थो, द्वितीये शब्दैकसमधिगम्यसाध्यानुबन्धभेदायत्तः शास्त्रभेद इत्येवमादिजगद्विलक्षणधिषणानृजुमतिमस्य कस्सहेत? अस्त्वप्रकृतं तदेतत् सर्वम् । विधि[1]शक्तिमपूर्वादाकृष्य भावनायां प्रतिष्ठापनीयेदानीम् । कोऽत्र प्रागल्भते?

भानुदेवः - (सप्रश्रयमञ्जलीं वद्ध्वा) आचार्यचरणकरुणासनाथस्य ✻ममैवास्त्वाज्ञप्तं कर्म ।

भट्टाचार्यः - तर्हि झडिति विधिमपूर्वादाकर्ष ।

भानुदेवः - श्रुतं किञ्चिद्विज्ञाप्यते ।

**◈[2]स्थाय्याश्रयासिकृतदर्पभरोद्धतात्मा**

**शक्त्या सहैव कनकाचलशृङ्गदेशम् ।**

---

♦ 'भवेत्' इत्युक्ते भवनं प्रतीयते । 'भावयेत्' इति कथने धातोः णिजन्तत्वात् भावना प्रतीयेतेति पूर्वमेव (पु-12) कथितम् ।

❖ प्रभाकरः कुमारिलाशिष्य आसीदिति केषाञ्चित्कल्पनेत्यादिकमपि पूर्वमेव (पु-...) कथितम् ।

✻ विधिशक्तिमपूर्वादाकृष्य भावनायां प्रतिष्ठापनरूपं कर्म ।

◈ स्थायी = स्थिरः आश्रमः = वलम् प्रभाकरगुरुरूपम्, तदगि ृना गर्वः, इत्यर्थः ।

---

1. शक्तिरपूर्वा - ख
2. स्थाया - ख

आसाद्य पामर इवाद्य विधिर्विहार-
कुञ्जस्थलीषु चरतीति हि लोकवार्ता ।। 2 ।।

**भट्टाचार्यः** - सन्निहितेऽपि विधौ किन्तवास्मिन् कर्मणि शक्तिरस्ति ।

**भानुदेवः** - गुरुचरणनियोगशक्तिरेव जागर्ति ।

**भट्टाचार्यः** - जडमते ! ♦दर्शनविरुद्धं भाषसे । यत्त्वयाचार्यानुज्ञासामर्थ्यमेव जागर्तीति वदता प्रभाकराभिमता विधेरपूर्वे शक्तिरेव जागरूकतयास्तीत्यवशादुक्तमासीत् । [1]विस्मृतं त्वयास्मदध्यापितं सर्वम्। कृत्रिम एव हि संप्रत्ययो भवति । उक्तं किल भगवता दन्दशूकचक्रवर्तिना तद्देशेषु तत्संप्रत्ययाय सङ्ख्या च सङ्ख्या संज्ञेति । उदाहृतञ्च ❖"गोपालकमानय" "कटजकमानये"ति । अतस्त्वं सर्वथा नास्मिन् कर्मणि प्रागल्भसे । अन्येन भवितव्यम् । (❋आपदेव उपसृत्य) भगवन्नापदेवोऽहमभिवादये ।

**भट्टाचार्यः** - आयुष्मानेधि । त्वं पुनरस्मद्दर्शनरहस्यकोविदस्त[2]त्क्षमः ।

**आपदेवः** - असन्निहितः खलु विधिः ।

---

♦ शिष्येण भानुदेवेन गौरवबुद्ध्या 'गुरुचरण नियोगशक्तिरेव' इत्यभिहितम् । तत्र 'गुरु' पदम्, 'नियोगशक्ति' पदं च श्रृण्वन् भट्टाचार्यः प्राभाकरपक्षपातादिदमुच्यत इति मत्वा "दर्शनविरुद्धं भाषसे" इति कुप्यति ।

❖ महाभाष्ये पतञ्जलिना "वहुगणवतुडति सङ्ख्या" (1-1-23) इति सूत्रे एवम् उदाहृतम् । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति यथा लोके । इति वार्तिकं विवृण्वता इदम् उदाहृतम् ।

❋ आपदेवोऽयं न्यायप्रकाशाख्यप्रकरणग्रन्थकर्ता भट्टमतानुयायी पात्रतया कल्पितः ।

---

1. विस्मृतं च या - ख
2. त्क्षेमः - ख

(नेपथ्ये । सन्निहित एवायम्)

**भट्टाचार्यः** - (श्रुतिमभिनीय, सविस्मयम्) किमेषा शुकस्येव भाषा ।

(ततः प्रविशति विधिः शुकहस्ता शक्तिश्च)

(भट्टाचार्यः सच्छात्रः प्रत्युत्थानं नाटयित्वा)

**भट्टाचार्यः** - इत उपविशतु भवान्♦ ।

(सर्वे यथोचितमुपविशन्ति)

**भट्टाचार्यः** - विधे ! वैदिकवृत्तिनिष्ठानां शुकसम्वन्धो हि गर्हितः❖ । तदयमुत्सृज्यताम् ।

**शुकः** - भगवन्नाहं शुकः अपि तु भावना, भवदन्तेवासिनी ।

(इति प्रणमति)

**भट्टाचार्यः** - (सविलक्ष[1]स्मितम्) अयि भावने ! कुतस्तवायं वेषः ।

**भावना** - (सभयविनयमञ्जलिं बद्ध्वा) भगवन् ! विज्ञापयामि, क्षन्तुमर्हसि। अपूर्वे [2]क्लृप्तप्रतिष्ठमात्मानमवधार्य स्वशक्त्याऽनया सह रन्तुं सर्वाद्भुतनिधेस्सुमेरोर्दक्षिणं श्रृङ्गमारुह्य तत्रैवंविधदिव्यशुककोटि-[3]निबिडीकृतमणिमण्टपोपकण्ठमासाद्य तत्समुदयमेव सोत्कण्ठ-

---

♦ विध्यर्थविपये विवादेऽपि विधौ गौरवातिशयस्य सर्वमीमांसकसम्मतत्वादेवमुपचारोक्तिः ।

❖ शुकपोपणादिकं प्राणिहिंसारूपं वैदिकानां नानुगुणमित्यर्थः ।

---

1. सितम् - ख
2. त्वपत - ख
3. निबिढी - ख

मालोकयति* विधावहमदृश्यतयानुसरन्त्ययमेव समय इति †तत्रैकाशुकी भूत्वा सत्त्वरमुपसृत्य शक्तेरस्याः करमारूढा । ततो मयि बद्धानुरागाविमौ [1]दंपती क्रमेणेतोऽधिकविचित्रविहार-स्थानानि [2]दर्शयिष्यामीति वञ्चनया शनैश्शनैरित आनयन् ।

**भट्टाचार्यः** - (विहस्य) अतिमायाविनी खलु त्वम् । विसृज [3]तावदेनं वेषम् ।

**भावना** - तथा

(इति निष्क्रान्ता)

**भट्टाचार्यः** - वत्स आपदेव ! [4]मतिमन् अस्य चञ्चलीकुर्वस्मद्दर्शनम् ।

(इति तदितरैश्छात्रैः सह निष्क्रान्तः)

**आपदेवः** - भगवन् विधे ! ❖अपूर्वपरिस्पन्दं सर्वथा मा कृथाः । अपि तु तन्मूलभूतभावनायामेव स्थातुमर्हसि ।

(प्रविश्य पटक्षेपेण भवदेवः)

✷**भवदेवः** - अलमलमवलेपेन ।

---

* 'विधौ' इति कर्तुम् अस्मिन् वाक्ये ।

† महाराजस्य विधेः शुकेषु प्रीतिं दृष्ट्वा, तदाकर्षणाय मया(भावनया)पि शुकरूपं स्वीकृतमित्यर्थः ।

❖ विधेः 'अपूर्व रूपार्थे स्थिरता संरक्ष्येति' भावः ।

✷ भवदेवः प्राभाकरानुयायी ।

---

1. दंपति - ख
2. दर्शयिष्यामिति - ख
3. तादेनं - ख
4. मतिमान् - ख

निपतति विधिशक्तिस्सानुरागे नियोगे
न खलु तदभिधाने भावना भावनार्हा ।
श्रमफलकनितान्ता घोषणै[1]र्दूषणैः किम्
गुरुमतविमतानामापदेवापदेव ! ।। 3 ।।

आपदेवः - (स्वगतम्) अपूर्वमेवापलपितव्य[2]मेतत् गर्वमूलम् । (प्रकाशम्) कृतं कुकविजनोचितया चाटूक्त्या । साधिकारचोदनायां श्रूयतामयं [3]कक्ष्याक्रमः[♦] ।

मानाभावान्नास्त्यपूर्वं न मानं
स्यात् प्रत्यक्षाद्यन्यमानैरमेये ।
तस्मिंस्तावन्नापि शब्दो लिङादे-
र्वेदि वाच्या लोकरीत्या क्रियैव ।। 4 ।।

भवदेवः - काम्यस्वर्गविशिष्टकामिन इह न्यायेन [❖]षष्ठादिम-
प्रख्यातेन नियोज्यतान्वयदृढीकारे नियोज्यस्ततः ।
जानीते निजकाम्यसाधनमसौ [4]कुर्यान्न न काम्यं क्षण-
ध्वंसिन्या क्रियया भविष्यति ततः कार्यं स्थिरं वक्ति लिङ्।।
।। 5 ।।

---

♦ लिङर्थः भावनेति वदतः आपदेवस्य, नियोग एव लिङर्थ इति वदतः भवदेवस्य च स्वस्वपक्षसाधनाय कक्ष्याक्रमेणात्र युक्तयः प्रदर्श्यन्ते ।

❖ षष्ठादिमेति ।

---

1. ईर्पणैः - ख
2. तर्कं - ख
3. कुक्ष्या - क
4. कार्य - ख

अन्यथा नियोज्यान्वयश्च नोप[1]पद्येत । तत् कथं नियोगे शब्दोऽपि मानमिति वक्तुं युक्तम् ।

आपदेवः - शब्दप्रभावात् फलसाधनत्वे
ज्ञाते क्रियाया उपपत्तयेऽस्य ।
तत् कल्प्यतां द्वारतया त्वपूर्वं
लिङादिवाच्यत्वममुष्य मा भूत् ।। 6 ।।

♦कल्पितापूर्वव्यवधानेनासाधनतायामाग्नेयादीनामप्यधिकारापूर्वसाधनता नोपपद्येत । सम्भूयोपकाराय कल्प्यैरवान्तरैरपूर्वैर्व्यवधानात् ।

भवदेवः - साधनतामर्हति खलु कालान्तरभाविनि क्रिया न फले ।
साधनतया क्षयिष्णोरवगतिरस्या न युज्यते तस्मात् ।। 7।।

आपदेवः - अपगोरणस्य चैवं साधनतानन्वये विनाशित्वात् ।
कथमन्विताभिधानं❖ तव मतरीत्या घटेत तद्वाक्ये ।। 8।।

भवदेवः - यदव्यवहितं तत्तु साधनं व्यवधानवत् ।
न साधनं तस्या[2]भावात् साधनं ह्यपगोरणम् ।। 9 ।।
यद्विद्यमानजन्यं तद्व्यापारो न चासदुत्पन्नम् ।
स्वव्यापारः स्वाङ्गं व्यवधायकता ततो न तस्यास्ति ।। 10।।

---

♦ कल्पितापूर्ववादी कुमारिलभट्टः । कल्पितत्वं नाम अनुमितत्वम् ।

❖ अन्विताभिधानवादी प्रभाकरः । कुमरिलस्तु अभिहितान्वयवादी ।

---

1. पपद्यते - ख
2. भावत् - ख

दुरितापूर्वं जनयत्यपगोरणकर्म विद्यमानं सत् ।
आग्नेयादीन्यपि हि स्वस्वापूर्वं तथैव जनयन्ति ।। 11 ।।

परमापूर्वञ्जनयत्याग्नेयादि स्वयं विनष्टं सत् ।
न हि तत्तद्व्यापारस्तव्यवधानात् फलेन [1]तद्धेतुः ।। 12।।

आपदेवः - यदि साधनतस्य लक्षणमेवं ब्रूया न तर्हि करणत्वम् ।
आग्नेयादेः परमापूर्व[2]द्वारा फलं प्रतीह स्यात् ।। 13 ।।

साधनतया हि लोके परशोः करणत्वमीक्षितम् ।
यूयं तदुपादानादाग्नेयादेः फले [3]किलावदत❖ ।। 14 ।।

साधनताघटितं किल करणत्वं सर्वकरणानाम् ।
न च साधनतारहितं करणीभवितुं प्रगल्भते तस्मात् ।।15।।

आग्नेयादौ नष्टे परमापूर्वं ह्यवान्तरापूर्वात् ।
भवतीति व्यवधानं तदभू[4]त्तस्मात् न साधनं तत् स्यात् ।।
।। 16 ।।

भावदेवः - श्रुतार्थापत्तितोऽपूर्वकल्पनैव न युज्यते ।
युक्तान्यतः प्रतीतोपपादकत्वस्य कल्पना ।। 17 ।।

पीनो नात्ति दिवेत्यत्र कल्प्यते रात्रिभोजनम् ।
प्रत्यक्षतः पीनतोपपादकत्वेन दर्शनात् ।। 18 ।।

---

❖ लङि मध्यमपुरुषबहुवचनरूपम् ।

---

1. तद्धेतुः - ख
2. द्वार - ख
3. किलापदत - ख
4. क्तस्मात् - ख

अपूर्वव्यवधानेन साधनत्वं तु कर्मणः ।
[1]नान्यतोऽवगतं तस्मादयुक्ता तस्य कल्पना ।। 19 ।।

व्यवधायामपि सत्यामाग्नेयादेर्बलेन शब्दस्य ।
उपपन्नं करणत्वं शब्दो ह्यज्ञातबोधने दक्षः ।। 20 ।।

आपदेवः - करणत्वं साधनताघटितं लोके हि तद्विरोधेन ।
[2]नायोग्यं करणत्वं क्षमते शब्दोऽपि तावदभिधातुम् ।। 21।।

तस्मात् त्वदुक्तसाधनलक्ष्मायोगात् वभूव निष्कम्पम् ।
[3]मदुदितशब्दाग्नेयप्रतिवन्दिद्वन्द्वमप्रतिद्वन्द्वम् ।। 22 ।।

भवदेवः - किं बहुना?

उचितं साधनताया उपपादकमेव नाम कल्पयितुम् ।
न हि साधन[4]साध्यमिह साधनतार्हं तथैव खल्वाहुः ।। 23।।

कल्पयितुं न हि शक्यं साधनतायै [5]ततस्त्वयाऽपूर्वम् ।
त्वत्कथितप्रति[6]वन्धिद्वन्द्वं चैतन्न युज्यते विषमम् ।। 24।।

तथाहि -

कालान्तरभावि फले साधनतार्हा न हि क्रिया साक्षात् ।
क्षणिका तस्मादेपा शक्या शव्देन नैव बोधयितुम् ।। 25।।

---

1. नान्यतोपगतं - ख
2. नायोग्यत्वं - ख
3. मधुदितशंयो - ख
4. साधनमिह - ख
5. तत्सत्वया - ख
6. वन्दि - क

आपदेवः - ❖ धातुसमत्वव्यवहितं भेषजपानं भविष्यदारोग्ये ।
साधनमेवमपूर्वव्यवहितयागोऽस्तु साधनं स्वर्गे ।। 26 ।।

भवदेवः - साधनभावो युक्तो भेषजपाने तथैव दृष्टत्वात् ।
केनापूर्वव्यवहितसाधनतावेक्षितेह यागस्य❖ ।। 27 ।।

तस्मादयोग्यं क्षणिकक्रियायाः
स्वर्गादिके भाविनि साधनत्वम् ।
तस्योपपत्त्यर्थमहो अपूर्वं
किं कल्प्यते व्यर्थतया भवद्भिः ।। 28 ।।

नियोगस्य वाक्यार्थत्वे त्वभिधानदशायामपर्यवसानबलदेवोपादान[1]मानतो यागस्य फल[2]साधनत्वकल्पना युक्ता ।

ततश्च -

कार्ये स्थायिनि साधनत्वघटके यागस्य तिष्ठन् स्वयं
स्वस्यैवानुपपत्तितः स्फुटतरं वेषान्तरं धारयन् ।
सामर्थ्यात् खलु निर्वहन् विजयते सर्वञ्च कार्योत्करं
योग्यायोग्यविचारणामकलयन् सर्वस्वतन्त्रो विधिः ।। 29।।

---

❖ भेषजपानं हि आरोग्ये वातपित्तश्लेष्मरूपत्रिधातुसमत्वसम्पादनद्वारैव हेतुः । एवं व्यवधानमात्रात् साधनत्वं नापगच्छति इत्यर्थः ।

❖ इह यागस्य अपूर्वव्यवहितसाधनता केन प्रमाणेन अवेक्षिता - इत्यन्वयः ।

---

1. मनोतो - ख
2. साधनत्वं - ख

तदलं तदभिधानप्रसङ्गक्रियेति भावनेत्यन्यदिति वा कुयुक्तिरचनाभिर्जोषमास्व । भगवन् विधे ! प्रभाकराचार्यदर्शितपथेन नियोगमेवाधिष्ठितो यथेच्छं विहर ।

(इति निष्क्रान्तास्सर्वे)

इति श्रीशैलकुलपारावारपारिजातस्य प्राभाकरमहासमुद्र-
कूलङ्कषधिषणस्य तातपादपादपद्मपरिचर्यालब्धसकल-
सारस्वतसमुदयस्य विद्वत् कविराजपट्टभद्र बिरुद-
समाख्याविख्यातस्य प्राभाकरवेङ्कटाचार्यतनयस्य
श्रीनिवासाचार्यवर्यस्य कृतिषु प्रौढाभिरामे
तृतीयोऽङ्कः

## चतुर्थोऽङ्कः

(ततः प्रविशत्याग्नेयामिक्षादिभिः परिवृतो विधिः अर्थवादश्च)

विधिः - (समन्तादवलोक्य साश्चर्यम्) हन्त ! जैमिनीय चतुर्थलक्षणमस्मन्मनोहर्षमपेक्षमाणैराग्नेयादिभिस्सम्यगलङ्कृतम् ।

पश्य -

[1]रत्नस्तम्भपरम्परोच्छ्रितविशाले च प्र[2]गाढोल्लस-
न्मुक्तश्रेणिरुचिच्छटोज्वलतरज्योत्स्नाभिरामं सदा ।
शाणोत्तेजितपद्मरागशकलाखण्डप्रदीपप्रभा-
सान्द्रं मे नयनोत्सवं बहुळयत्यास्थानमेतन्महत् ।। 1 ।।

(स्मृतिमभिनीय, पुनः साश्चर्यम्)

अहो ! पुरास्माभिरवलोकितं सुमेरुशृङ्गमतिशेते खल्विदमास्थानम्।

अत्र हि -

[3]सङ्ख्यातुं प्रभवाम्यनीक्षितचरान् वस्तुप्रभेदानिमा-
न्नाहं स्यात्[♦] प्रतिवस्तुसंस्तुतिविधौ शेषोऽपि वाचंयमः ।

---

♦ शेषोऽपि वाचंयमः स्यादित्यन्वयः ।

---

1. रक्त - ख
2. विशालोल्लेन्न - ख
3. संघातुं - ख

आश्चर्येण परं मनः कवळितं स्तब्धे पुनर्लोचने
वाङ्मात्रं विषयस्य गौरववशाल्लब्धावकाशं मम ।। 2 ।।

नन्वाग्नेय ! कस्येदमचुम्बितचातुरीविजृम्भितम् ।

**आग्नेयः** - अत्र भवतश्चक्षुःप्रीतये बहोः कालादस्माभि[1]राश्रितस्य विश्वकर्मणोऽयं मायाप्रपञ्चः । इह मणिमयसाम्राज्यसिंहासनरूपनिचोळिते नियोगे तावदुप[2]विशन्तु श्रीमन्तः ।

**विधिः** - ([3]सलीलं परिक्रम्य सिंहासनारोहणं नाटयित्वा) नन्वाग्नेय ! किमर्थमस्माकमिहानयनम् ।

**आग्नेयः** - (सप्रश्रयमञ्जलिं बद्ध्वा) महाराज ! सन्निधिवशाद्व्रीहिमात्रशेषेण भवता प्रोक्षणेनास्माकमपि षण्णां शेषेण भवितव्यम् । एतदर्थमनिवार्या निरन्तरं स्पर्धा वर्तते नस्तेन तटस्थेन ।

**विधिः** - आमिक्षे ! किन्तव कुतूहलम् ।

**आमिक्षा** - (उपसृत्य प्रणम्य च) दध्यानयनस्य मयि प्रयुक्तिरभिलषिता।

**विधिः** - सौर्य ! किं ते मनीषितम्?

**सौर्यः** - महाराज ! उदीच्याङ्ग[4]जन्योपकार[5]साहित्यायोत्पत्तिनियोगमभ्यर्थये[♦] ।

---

♦ सौर्येष्टौ प्रकृतितः अङ्गानां प्राप्त्या, तस्य का प्रकृतिरिति निर्णयः कर्तव्यो भवतीत्यर्थः । यागस्य हि स्वरूपं द्रव्यं देवता च । तत् कथमत्र लभ्यमिति जिज्ञासा ।

---

1. राशीतस्य - ख
2. विशन्ति - ख
3. सलिलं - ख
4. जन्योपकारे - ख
5. साहियात्पत्ति - ख

**विधिः** - हे विश्वजित् ! का तव प्रार्थना?

**विश्वजित्** - ♦अश्रुताधिकारोऽहमधिकारिणं कामये ।

**विधिः** - (स्मितं कृत्वा) सखेऽर्थवाद ! पश्यास्माकमधिकारविष्फूर्तिम् ।

**अर्थवादः** - (पर्श्वतोऽवलोक्य, विहस्य च) महाराज ❖करणपशुरेव प्रार्थना-परोऽपि भयवशान्मौनमास्ते ।

**विधिः** - (विलोक्य सोपहासम्) ननु करणपशो ! नायं विशसनावसरो मा भैषीः । उद्घाटय मनोगतम् ।

**करणपशुः** - (प्रणम्य) पश्वेकत्वस्य [1]मच्छेषत्वमभिलषामि ।

**विधिः** - (सर्वान् प्रति) सर्वेषां वो मनोरथः सफलो भविष्यति ।

(प्रविश्य पटाक्षेपेण विनियोगः)

**विनियोगः** - महाराज ! एष ❋तार्त्तीयो विनियोगः प्रणमामि ।

**विधिः** - विनियोग ! किमतीव त्वरयाऽऽगतोऽसि ।

**विनियोगः** - महाराज ! स्वस्योपजीव्यताज्ञापनाय शेषलक्षणेन [2]सत्वरञ्चोदितोऽस्मि ।

**विधिः** - तदनुपालेन जागरुका [3]एव वयमिति निवेदय ।

---

♦ फलकामनावान् अधिकारी । 'विश्वजिता यजेत' इत्यत्र फलस्याश्रवणात्, स विधिः फलमपेक्षते ।

❖ 'पशुना यजेत' इति यागे पशुः करणतया विधीयते । तत्रैकवचनिर्देशेन एकत्वस्य प्राप्तिः । अतः 'एकत्वस्य मच्छेपत्वमभिलषामि' इति समनन्तरोक्तिः ।

❋ तार्तीयः = तृतीयाध्यायप्रतिपाद्यः विनियोगविधिः ।

---

1. मश्चेषत्व - ख
2. रत्वर - ख
3. वयमिति - ख

**विनियोगः** - तथा ।

(इति निष्क्रान्तः)

**विधिः** - वयस्यार्थवाद ! महाराजाधिकारो[1]ह्यन्यादृशः । तथाहि ।

**अन्योन्यान्वितलक्षणोऽधिकरणप्रस्फूर्तिमापादय-**
**न्नन्योभेद्यनियोग[2]शक्तिरखिलाभीष्टार्थ निर्वाहकः ।**
**नैकन्याययुतोऽल्पकार्यविमुखः स्वस्योपपत्तिं प्रति-**
**स्वल्पानप्यनु[3]वर्त्तमान इह हि ख्यातिं भजेत् भूपतिः** [♦] ।।3।।

अहमेवात्र दृष्टान्तः । तदहमुपादानवेषमादाय क्रमेणैतान् प्रतीद-मनुशास्मि ।

(तथा कृत्वा) भो आग्नेय ! व्रीहिसाध्येषु युष्मासु वैनियोगिकं व्रीहिशेषत्वमुपजीव्यैव प्रोक्षणस्यौपादानिकं शेषत्वमस्तु । आमिक्षे इत इतः ।

(आमिक्षा सत्वरमुपसरति)

**विधिः** - अयि ! वैनियोगिकं त्वच्छेषत्वमुपजीव्य दध्यानयनस्य त्वयि प्रयुक्तिरस्त्वौपादानिकी । [4]सौर्य ! इत इतः ।

---

♦ नियोगस्य लिङर्थत्वात्, लोके राज्ञो नियोगेन परस्परसापेक्षाणां प्रजानां यथा परस्परसमन्वयादिष्टसिद्धिः, तथैवास्मिन् शास्त्रे, राजस्थानापन्नस्य लिङर्थस्य विधेः नियोगात्, अङ्गाङ्ग्यादीनां परस्परान्वयसिद्ध्या यागानां तत्तदिष्टसाधनत्वसिद्धि-रित्यभिप्रायः । एतदेवानन्तरवाक्येषु प्रतिपाद्यते ।

---

1. स्यन्यादृशः - ख
2. शक्ति - ख
3. वक्तुमान - ख
4. सौर्येत - ख

[1]सौर्यः - सविनयमुपसरति ।

विधिः - अयि ! वैनियोगिकोदीच्याङ्गजन्योपकारसाहित्योपजीविनी तवोत्पत्तिरौपादानिकी भवतु । विश्वजिदित इतः । (विश्वजित् उपसरति)

विधिः - नन्वौपादानिकं स्वर्गकामनियोज्यं लभेथाः । करणपशो ! इत एहि । श्रौतं पशुशेषत्वमेवोपजीव्य त्वयि शेषत्वमस्त्वौपादानिकमेकत्वस्य । सर्वे स्वस्वस्थानान्याश्रयत ।

(आग्नेयादयो निष्क्रान्ताः)

विधिः - सखेऽर्थवाद । क्रत्वर्थपुरुषार्थभेदपरिपालनाय लिङ्गसचिवेन मया भवितव्यम् । तदा लिङ्गसचिवोपादानगम्यः क्रत्वर्थः केवलोपादानगम्यः पुरुषार्थ इति [2]सुगमो भवति भेदो जनानाम् । [3]तदवश्यं [4]लिङ्गं गवेषणीयम् ।

(इति सिंहासनादवरुह्य परिक्रामति)

(आकाशे) ♦अविह ! अविह !

विधिः - (श्रुतिमभिनीय) शक्ते ! किं दूरस्थासि ।

शक्तिः - (उच्चैः) ❖माआविणी खु भावणा निअकरगहीदवेणीमूळा म कढ्ढइ ।

---

♦ अवत ! अवत !

❖ मायाविनी खलु भवना निजकरगृहीतवेणीमूला मां कर्षति ।

---

1. सौर्यम् - ख
2. सङ्गमो - ख
3. तदवशं - ख
4. लिङ्गाङ्गवेप - ख

**विधिः** - (सविस्मयम्) कदेहागता वराकी भावना? (प्रत्युत्तरमनुपलभ्य) हा सहचरिशक्ते ! क्व गतासि । सखेऽर्थवाद ! सुदूरं नीता खलु शक्तिर्मायाविन्या [1]भावनया विनैव मामनाघ्रातवियोगगन्धलेशम् । तत्कथं विश्वकर्मनिर्मितेषु तावदेवंविधक्रीडोद्देशेषु प्रियसहचरीविरहितः प्राणान् धारयितुमर्हामि । (पश्य) अत्र हि ।

**एतत् पुष्पितमञ्जुकुञ्जनिबिडोपान्तं रसालावळी-**
**खेलत्कोकिल[2]कण्ठनादमुखरं मन्दानिलैस्सेवितम् ।**
**लीलाभ्युत्पतदेणशावमभितः कासार[3]वीच्यन्तर-**
**क्रीडद्राजमराळमण्डलमहो उद्यानमालोक्यते ।। 4 ।।**

इतश्च -

**अत्यद्भुतस्फटिकपुत्तळिकाकरस्थ-**
**[4]रत्नप्रदीप[♦] [5]रुगपास्ततमः प्रचारः ।**
**आबद्ध[6]हेममयपञ्जरचारिकीरः**
**आभाति हन्त मणिमन्दिरसौधदेशः ।। 5 ।।**

---

♦ रुक् = प्रभा । "स्युः प्रभा रुक् रुचिः" इत्यमरः ।

---

1. भावनयापि - ख
2. कर्ण - ख
3. वीद्यन्तर - ख
4. रतु - ख
5. रुडपास्त - ख
6. हेमय - ख

अन्यत्र -

एते समीररचितोपवनप्रतोळी-
सञ्चारलब्धघनसौरभगन्धवाहाः ।
माद्यन्मराळमृदुचङ्क्रमणाभिरामा
अग्रे स्फुरन्ति तटिनीसिकताप्रदेशाः ।। 6 ।।

([1]श्रुतिमभिनीय)

अनङ्गसञ्जीवनसिद्धमन्त्रं
प्रपञ्चयन् पञ्चममद्य भूयः ।
आटीकते कोकिल एष गर्वा-
दशोकवाटीषु ♦सशोकयन् माम् ।। 7 ।।

अपि च -

यया सह मनोहरं यदुपलब्धमासीन्मया
तदद्य तु तया विना बत सुदुस्सहं भाति मे ।
प्रतिक्षणगुरुभवद्विरहयातनापूतना-
मुखे निपतनं कुतो कुरुत लोकबन्धुर्विधिः ।। 8 ।।

[2]अद्य हि -

द्रमिडयुवतिचूळीहल्ल[3]कामोदचोराः
मलयगिरिसमीराः कालकूटं वमन्ति ।

---

♦ सशोकयन् = शोकयुक्तं कुर्वन् ।

---

1. श्रम - ख
2. तश्चवृहि - ख
3. कामोन्द - ख

दहति तु हिनभानुः पातकी रश्मिभिः स्वै-
र्जगति विरहखेदः स्वाहितस्यापि मा भूत् ।। 9 ।।

(पुनः पञ्चषपदानि गत्वा)

इह हि -

कुरवकवन[1]विथीस्वैरसञ्चारकेळी-
तरळपवनधारा बन्धुराः केऽपि देशाः ।
मदपरवशभृङ्गीमञ्जुसङ्गीतरम्या-
धुरि मम विलसन्तः स्वान्तमालोलयन्ति ।। 10 ।।

[2]अद्य हि, हन्त !

अन्तश्चिन्ताजुषि विलिखितेवान्तरङ्गे नितान्तं
चक्षुःप्रीतिप्रसरसमये नेत्रयोर्बिम्बितेव ।
वाक्शुश्रूषां वहति सहसा लग्नवाणीव कर्णे
मुञ्चन्ती मामपि न करणान्युज्झतीवाद्य सा मे ।। 11 ।।

(स्मृतिमभिनीय)

मुग्धस्निग्धकपोलभित्तिरचितप्रत्यग्रपत्राङ्कुर-
श्रेणीनिर्भरलोभनीयवदनां सुश्लिष्टवृत्तस्तनीम् ।
फालालोलसुनीलवक्रचिकुरां तामेणशावेक्षणां
लीलाचङ्क्रमणैश्शनैरुपगतां द्रक्ष्यामि साक्षात् कदा ।। 12।।

---

1. वीधी - ख
2. हि - ख

❖[1]अकटकट ! इदानीमसमशरस्य [2]कण्टकव्यापारो मामनल्पमाकुलयति ।

(दीर्घमुष्णञ्च निश्वस्य)

सखेऽर्थवाद ! निरन्तरदृढपरिरम्भसम्भ्रमोपलालिताया दयितायाः कीदृशी वाद्य समवस्था । तत्र परं दूये ।

**सोत्कण्ठगाढपरिरम्भसुखोपभोगे**
**सा कञ्चुकव्यवधिमप्यतितिक्षमाणा ।**
**दूरेऽधुना विधिवशात्कृतसन्निवेशा**
**मामन्तरेण दयिता भविता कथं वा ।। 13 ।।**

अपि च -

**सद्यः प्रफुल्लवरचम्पकदाममुग्ध-**
**स्निग्धं नितम्बभरनिर्भर[3]मन्दयानम् ।**
**यद्भूषणान्यपि विभूषयितुं क्षमं तत्-**
**तन्व्या वपुर्मम पुरो भविता कदा वा ।। 14 ।।**
**सेदानीं नवरत्नकर्बुर❖भरुत्काञ्चीरणत्किङ्किणी**
**लीलालोलदनर्घनूपुरझणत्कारावृताशान्तरा ।**

---

❖ 'अकटकट' इति दुःखसूचकश्शब्दः । 'अब्रह्मण्यम्' इत्यादिवत् । यतः कटकटेति सन्तोपं सूचयति ।

❖ भरुक् ।

---

1. कटकण्टेदानी - ख
2. कन्दक - ख
3. मन्धयानम् - ख

उन्मीलत्करिपोतदन्तफलकच्छायालगण्डस्थली-
नृत्यन्ती प्रतिमेव सन्ततमहो आस्ते पुरस्तादिव ।। 15 ।।

(सोपालम्भम्) निजललाटलिखितनिरन्तरपरपुरुषसेवने भावने! वराकि ! परुषतरमाचरितं त्वया । या खलु त्वमुप[1]वनादिवलतां प्रकृतिकर्कशा मर्कटी मत्सकाशादुत्सवपरवशां शक्तिं मम ♦हठा-दाकृष्टवती । क्षिप्रं दैवपराहता भवितुमर्हसि । दिष्ट्या चिरञ्जीवतु क्वचिदुचितकर्मपरायणा मम प्रियसहचरी शक्तिः ।

(पुनः स्मृतिमभिनीय) हा देवि ! शरद्विभावरीस्फुटतरतारका-कारकमनीयवरमणि ललाटिकाभिरामनिटिलां[2]मुग्धेन्दुसुन्दरनिज-फालफलकचल[3]दलिकुलनिभ[4]कुटिलकुन्तळां श्रुतिसदनदेहळी-विन्यस्तचरणलोललोचनां नितम्बिनीशिखामणिं भवतीं कदा पुन-रालोकयिष्यामि ।

अर्थवादः - (सानुनयम्) महाराज ! [5]आश्वासिहि ।

कात्यायनीव भूतेशं लक्ष्मीरिव चतुर्भुजम् ।
नित्यानपायिनी शक्तिः पुनस्त्वां प्रतिपत्स्यते ।। 16 ।।

विधिः - (धृतिमवलम्ब्य पुनः परिक्रम्य, समयं विभाव्य, [6]सवैलक्षम्)

---

♦ मम शक्तिं मत्सकाशात् हठात् आकृष्टवती - इत्यन्वयः ।

---

1. घनादिव - ख
2. मुग्धैन्दु - ख
3. दलिकुल - ख
4. कटिल - ख
5. आश्वसिह - ख
6. सवैलक्ष्यम् - ख

[1]विश्लिष्टानि सरस्सु कोक[2]मिथुनान्यन्योन्यमम्भोनिधि-
र्मोदा[3]देषविवर्द्धते कमलिनी निद्राभिमुख्यं गता ।
उद्बुद्धाः कुमुदाकराः प्रमुदिताश्चैते [4]चकोरा परं
हा ! हन्तोदयशैलशृङ्गमधुना चण्डांशुरालम्बते ।। 17 ।।

अर्थवादः - महाराज ! नैष चण्डांशुः, अपि तु शीतांशुरेव ।

विधिः - (विमृश्य) धिक् ! विरहभरकृत[5]मन्यथाख्यातिविजृम्भितम् । लोके हि -

[6]लक्ष्यं न प्रतिपद्यते करणसन्दोहो[7]ऽथवा नः स्थितं
गृह्णाति प्रकृतिस्तु कश्मलतरं वैचित्र्यमालम्बते ।
शोषं यान्ति विशेषतस्त्ववयवाश्शोकैकसारे परं
मन्दात्मा विरहे जतस्ततश्चोन्मत्तवत् भ्राम्यति ।। 18 ।।

सर्वमेतन्मयीदानीं दृश्यते । नूनमनुसरणकपटादाग्नेयादिभिर्वञ्चितोऽस्मि । कथमन्यथा शब्दसमुदायात्मकस्य प्रयुक्ति लक्षणस्यैवंविधपरमाद्भुतपरिणामः ।

अर्थवादः - महाराज ! कृतमतिशङ्कया ! ते किल युष्मदाश्रयकोटिप्रविष्टाः न स्वाम्यपराधे [8]सर्वथा प्रवर्त्तेरन् । अपि तु भक्तिवशादत्रभवतो

1. विशिष्टानि - ख
2. मिधुना - ख
3. देश - ख
4. चकोरः - ख
5. मन्यधा - ख
6. लक्षं न - ख
7. ऽधवा - ख
8. सर्वधा - ख

[1]नयनोत्सवाय तैश्चिरादनुसृतेन विश्वकर्मणा रचित एवायमद्भुत-प्रपञ्चः । यतः -

**♦माता माता तात [2]एवेह तातः**
**स्वामी त्वेको भाति तत्सर्वरूपः ।**
**सर्वे द्रोहाः पुण्यकर्मापनेयाः**
**स्वामिद्रोहो निष्कृतेर्दूरवर्ती ।। 19 ।।**

**विधिः** - सखे ! परवशतया प्रलपितं न दोषाय । (पुनः परिक्रम्यावलोक्य च) काविमौ सत्वमित एवाभिवर्तेते चित्रफलकहस्तौ राजपुरुषौ।

(ततः प्रविशतो यथानिर्दिष्टौ प्रयाजानुयाजौ)

**प्रयाजानूयाजौ** - (प्रणम्य) भगवन् ! अत्र भवतो विनोदाय देव्या पथिक-[3]मुखेन प्रहितं दिष्ट्यास्मद्वशमासादितमेतच्चित्रफलकमङ्गीकरोत्वत्र भवान् ।

**विधिः** - (सकौतुकं चित्रफलकमादाय निर्वर्ण्य च) [4]अयि ! चित्रफलक ! ज्वलन्तमनलमाज्यधारेवास्मद्विरहतापं त्वमुज्ज्वलयिष्यसि । चित्रं निर्वर्ण्य ।

---

♦ अस्मिन् हि दिव्ये देशे द्रोहादीनां न प्रसक्तिरिति तात्पर्यम् ।

---

1. नयनोत्सवायैश्चिरा - ख
2. एवैह - ख
3. मुखेन मुखेन प्रहितं - ख
4. अवधि - ख

किञ्चित्कुञ्चितकोमलाधरदळं [1]वक्रायत[2]भ्रूलतं
[3]फालालम्ब्यनृजु[4]श्लथाळकमिदं स्मेरं दरश्यामलम् ।
कर्णान्तप्रसरद्विलोचनयुगं कल्याणकेळीगृहं
वक्त्रं तावकमम्बुजप्रतिभटं चुम्बमि विम्बाधरे ।। 20 ।।

(इति सानुरागं चुम्बनमभिनीय) देवि ! चित्रफलकं चोदयन्त्या हि त्वया मयि प्रेमातिशयः स्फुटीकृतः । तदनेन कथञ्चित् प्राणान्धारयिष्यामि ।

(निष्क्रान्तास्सर्वे)

इति श्रीशैलकुलपारावारपारिजातस्य प्राभाकरमहासमुद्र-
कूलङ्कषधिषणस्य तातपादपादपद्मपरिचर्यालब्धसकल-
सारस्वतसमुदयस्य विद्वत् कविराजपट्टभद्र बिरुद-
समाख्याविख्यातस्य प्राभाकरवेङ्कटाचार्यतनयस्य
श्रीनिवासाचार्यवर्यस्य कृतिषु प्रौढाभिरामे

## चतुर्थोऽङ्कः

1. पत्रा - ख
2. भूधृतं - ख
3. फालान - ख
4. श्लधा - ख

## पञ्चमोऽङ्कः

(ततः प्रविशति ब्राह्मणद्वयम्)

एकः - सखे विष्णुशर्मन् ! पश्य । मणिकर्णिकाघट्टे मिळितमशेषं ब्राह्मणमण्डलम् ।

विष्णुशर्मा - सखे शम्भुशर्मन् ! किन्निमित्तम्?

शम्भुशर्मा - किं न श्रृणोषि? तत्रभवद्भिर्भट्टपादैर्विधिवाच्यतयाभिमतया भावनयाऽपहृतां स्वशक्तिं मृगयमाणो भगवान् विधिरर्थवादेन सह मार्गवशात् भागीरथीतीरमागत इति किंवदन्ती । अतस्तत्सन्दर्शनाय समुदितैषा महासभा ।

विष्णुशर्मा - (विहस्य) अहो ! विधेरपि विधिवशंवदता ।

शम्भुशर्मा - मुग्ध ! मैवं वादीः ।

को दैवादधिकोऽस्ति सर्वमहतो मर्त्येष्वमर्त्येषु वा
दैवं खल्विह तारतम्यगणनाविश्रन्तिभूर्विश्रुतम् ।
दैवस्यैव हि नाटकं त्रिभुवनं लीलात्रयं विभ्रतो
दैवाज्ञैव गरीयसी भगवती को दैवमुल्लङ्घते ।। 1 ।।

विष्णुशर्मा - यथार्थमेवैतत् । सखे शम्भुशर्मन् ! विधिशक्त्योर्दाम्पत्य[1]कल्पना दैवेन ममाश्चर्यमुद्वेलयति ।

---

1. कल्पनं - ख

**शम्भुशर्मा** - नेदं चित्रम् । पश्य ।

♦वर्ष्माणुद्वयसं मनागिह पृथू पूर्वापरौ मध्यतो
[1]भागौ तत्र मुखादयोऽप्यवयवाः स्वस्वक्रियाकोविदाः ।
तद्देहाधिकधान्यकर्षणपटुस्थामक्षितावादरा-
देवं क्षुद्रपिपीलिकामपि सृजन् किं किन्न कुर्याद्विधिः ।।2।।

आस्तां नाम, दैवम् । प्रसङ्गादुपश्लोकितम् । वैदिको विधिर्हि भगवान् परमाद्भुतनिधिरपि दैवमतिशेते । यदयं स्वयमेवात्म शक्त्योर्दाम्पत्यमुररीकृत्य, तदुचितवेषमादाय रमत इति श्रुतचरमेतत् । ईदृश एव स्वभावो महताम् । तथा हि ।

शान्तोऽनवद्योऽपि निरञ्जनोऽपि
क्रियाविदूरोऽपि स निष्कलोऽपि ।
हरिस्समासादितनैकरूपो
रेमे हि लक्ष्म्या बुहुरूपभाजा ।। 3 ।।

तदलं प्रत्यवायहेतुना महात्मपरीक्षया ।

**विष्णुशर्मा** - (कपोले पाणिं कृत्वा) अपराद्धम् । तर्ह्यावयोरपि तत्सन्दर्शनेन भवितव्यम् ।

(इति निष्क्रान्तौ)

---

♦ वर्ष्म = शरीरम् अणुद्वयसम् = अणुपरिमाणम् = प्रमाणे द्वयसच् प्रत्ययः । पिपीलिकावर्णनमिदम् ।

---

1. भागा - ख

## शुद्धविष्कम्भः

(ततः प्रविशति गङ्गातीरस्थावस्थो विधिरर्थवादश्च)

**विधिः** - (निश्वस्य) सखे ! वहोः कालादपि[1]गवेष्यमाणा शक्तिः कुहापि न लक्ष्यते । तद्वशात् पुण्यं भागीरथीसन्दर्शनं नस्सम्पन्नम् ।

पश्य -

**एषा भाति जगत्पवित्रसलिला भूषायमाणा भुवो**
**गङ्गा दिव्यनदी समस्तसरिदुत्तुङ्गा [2]रमेशाङ्घ्रिभूः ।**
**देहान्तेऽत्र ढुलीकुळीरशफरीभेकादयो लीलया**
**शम्भोर्यान्ति सरूपतां भगवतो मर्त्याः पुनः का कथा ।।4।।**

अस्याः खल्वेतत् ।

**मन्दस्पन्दानिलौघप्रसरणविगलत्पुष्पधूळीकदम्बा-**
**कीर्णं घूर्णत्कुरङ्गोत्करमुरुनिनदत्कोकिलालापरम्यम् ।**
**♦आलोलैलालवङ्गव्रततिविततिभाक्केळिकुञ्जाभिरामं**
**भृङ्गीसङ्गीतशालायितमतिविपुलं भाति तीरं तटिन्याः ।।5।।**

**अर्थवादः** - महाराज ! युष्मदधीनमाहात्म्यतयैवैनां प्रणमन्ति सर्वे लोकाः।

**विधिः** - (परिक्रम्य पुरोऽवलोक्य) अहो ! सर्वतस्समाहितपरमहंस-परिव्राजकमण्डला ससंभ्रमा वर्तमानवाराणसीजनसाश्चर्यविलोकनदत्तादरलोचनमरीचिमेचकितोपान्ता मणिकर्णिका तरङ्गयति नयनानन्दम् । नूनमिमेऽस्मदागमनमवेत्य दिदृक्षयाभिवर्तन्ते । तदा-

---

♦ 'तालमालं च हरितालके' इत्यमरः । हरितालवृक्षः आलः ।

---

1. गवेष्यमाण - ख
2. रमेशां विभूः - ख

वाभ्यामन्यतो गन्तव्यम् । दुर्दशावशाल्लज्ञते परमन्तरात्मा ।
(इत्युभावन्यतः परिक्रामतः)

विधिः - सखे ! पश्य । जगत्पावनं गङ्गायमुनयोस्सङ्गमम् । (स्मृतिमभिनीय)

**सरितौ वेदविख्याते❖ इमे एव सितासिते ।**
**भजतां सङ्गमनयोः पुनर्जन्म न विद्यते ।। 6 ।।**

अर्थवादः - इदं हि प्रागेवोक्तं स्वस्थाने भवता ।

विधिः - भगवत्यौ गङ्गायमुने ! यथा युवां सङ्गते, एव मावां [1]मिथस्सङ्ग[2]मयेथाम् । (कर्णं दत्वा) किं ब्रूथ ! क्षिप्रमेव तथास्त्विति । तर्हि जितं मया ।

(आलोकमुपलभ्य ऊर्ध्वमालोक्य साश्चर्यम्)

**नक्षत्रमात्रगुडुवर्त्मनि दृष्टमादौ**
**किञ्चित्ततोऽवतरदारुणबिम्बदघ्नम् ।**
**तेजस्तत[3]स्तदिदमाकृतिशालि किञ्चि-**
**द्दिव्यं विमान[4]मुपकण्ठगतं बतासीत् ।। 7 ।।**

(विमृश्य) हन्त ! नियोग एव स्वयं दिव्यविमानेन शक्तिमित आनयति ।

---

❖ "इमं मे गङ्गे यमुने" इति तैत्तिरीयमहानारायणोपनिषत् ।

---

1. मिध - ख
2. मयेधाम् - ख
3. स्तदिद - ख
4. मुपकर्ण - ख

(ततः प्रविशति [1]शक्त्यधिष्ठितेन
विमानेन नियोगः, उपसृत्य)

[2]**नियोगः** - (उपसृत्य) भगवन् ! प्रणमामि ।

**विधिः** - (सहर्षम्) ननु कथं समर्थितमेतत् त्वया ।

**नियोगः** - तदानीमदृश्यतयोपसृत्य सिंहासनोद्देवीमिमामुत्कृष्य गगनपथं प्रति धावन्तीं मायाविनीं भावनां परिशीलितमन्त्रकलापोऽह-मनुधावन्नाकृष्य भगवतस्सहस्राक्षस्य सभामनयम् । स खलु सुकृतीतरदुर्लभायां देवसभायां [3]स्पर्धामूलमावयोस्सम्यग्विचार्य [4]"त्वय्येव विधिशक्तिरवस्थातुमर्हति । नयानेन दिव्यविमानेन तावदेनां विधिसन्निधिम्" इति व्योमयानमिदं प्रदाय मामादरात् क्षितितलं प्रति न्यवर्तयत् । भावनां पुनर्व्रीळितमुखीमित उपरि विधिशक्त्या कर्षणांशे ध्वस्तचातुरी भवेति शप्त्वा भूमौ न्यपात-यत् । तदिदमनेकविचित्रोपेतमधिरुह्य यथेच्छं विहरतु भवान् । अहमप्यन्तरङ्गाधिष्टानतयाऽनुवर्त्ते ।

**विधिः** - (सश्लाघम्) सुष्ठु समर्थितं त्वया । हस्ते तव कैषा पत्रिका?

**नियोगः** - (स्मृतिमभिनीय, ससम्भ्रमम्) भगवन् ! तत्रभवता बृहस्पतिना भवते प्रहितेयम् ।

**विधिः** - अर्थवाद ! वाचय ।

**अर्थवादः** - (वाचयति) ।

---

1. शक्त्यदिष्टितेन - ख
2. भगवन् - ख
3. सर्धा - ख
4. त्वयैव - ख

**स्पर्धामूलमिहातिमात्रमनयोरालोड्य निर्धारितं**
**सर्वैस्सर्वकलारहस्यकुशलैरिन्द्रादिवर्हिर्मुखैः ।**
**स्वर्गारोहणकेळिमुख्यसचिवेमानान्तराचुम्बिते**
**स्थायिन्य[1]प्रयितार्थबोधकविधेश्शक्तिर्नियोगे दृढा ।। 8 ।।**

इति ।

विधिः - (सोत्साहभरमर्थवादेन सह विमानारोहणं नाटयित्वा । अपवार्य शक्तिमालिङ्गति)

(नेपथ्ये कलकलः)

विधिः - (श्रुतिमभिनीय) सखे ! अस्माकं शुभसूचनाय खल्विदानीं त्रिविष्टपे देवदुन्दुभिस्ताड्यते । (सर्वे सविस्मयमाकर्णयन्ति)

विधिः - (शक्तिमुखम् विभाव्य)

**पुलोमजादत्तललाटिकाढ्यं**
**कर्णावतंसीकृतपारिजातम् ।**
**नासादळारोपितदिव्यरत्नं**
**त्वदाननं नश्शुभमातनोतु ।। 9 ।।**

शक्तिः - ❖अअउत्त ! तत्त होदीए पुळोमआए सादरंमं अंदेउरं णीदवदीए दिण्णं एदं । कहिदं अ महाणुहावस्स [2]विहिणो कळत्तं तुमं

---

❖ आर्यपुत्र ! तत्रभवत्या पुलोमजया सादरमन्तःपुरं नीतवत्या दत्तमेतत् । कथितं च महानुभावस्य विधेः कलत्रं त्वं अस्माकं पूजनीयेति । अपि देवैस्सर्वैः बहुमानपूर्वकं मम प्रणामः कृतः ।

---

1. प्रधितार्थ - ख
2. हिणो - ख

अंह्माणं पूअणींएत्त । अवि देवेहिं सव्वेहिं बहुमाणपुव्वअं महपणामो [1]कओ ।

विधिः - (पुनः पुनर्विभाव्य)

[2]प्रफुल्लनवमल्लिकास्त्रगुपमं तटिद्वल्लिका-
सहोदरमिदं सदोद्धृतंनिमेषवीक्षोचितम् ।
पृथुस्तनधुरन्धरं प्रकृतिसुन्दरं बन्धुरं
धनं मम चिरन्तनं प्रियतमे ! त्वदीयं वपुः ।। 10 ।।

शक्तिः - (लज्जयानतमुखी वर्त्तते)

नियोगः - इयमिह महाराजविहारोचिता चन्द्रशाला ।

विधिः - (शक्त्या सह चन्द्रशालाप्रवेशं नाटयित्वा)

स्फटिकमयविहार[3]प्राङ्गणान्तर्निवद्ध-
स्फुटमणिमयडोलायन्त्रगाढाभिरामा ।
विलसति हि समन्ताल्लम्बमन्दारमाला
सकलदृगनुकूला चन्द्रशाला विशाला ।। 11 ।।

(प्रतिबिम्बमुपलभ्य सविस्मयम्)

अभिन्नरूपोभयतः प्रियाया
विलोक्यते सम्प्रति मे तनुश्च ।
हन्तेह बिम्वप्रतिबिम्बभेदा-
[✦]स्त्वगेकसाध्यो न तु दृष्टिगम्यः ।। 12 ।।

---

✦ त्वक् = त्वगिन्द्रियम् । स्पर्शनेनैवायमादर्श इति ज्ञातुं शक्यत इत्यर्थः ।

---

1. क ए - ख
2. प्रफुल्लवन - ख
3. प्राङ्कणा - क

(परिक्रम्य ! पुरोऽवलोक्य)

हन्त ! इहास्थानमण्टपस्तम्भकीलिता मणिमयपुत्तळिका ❖[1]विप्रश्निका भूत्वेन एवाभिवर्तते ।

पश्य -

इयमुपकरणानां पेटिकां धारयन्ती
शिरसि निभृतगुञ्जत्पादुकाध्यासिङ्घ्रि ।
मणि[2]किलिकिलिकाभृन्मञ्जूवेषा सगर्वं
कलितविविधभूषा याति विप्रश्निकेह ।। 13 ।।

(ततः प्रविशति यथोक्तवेषा विप्रश्निका)

**विप्रश्निका** - महाराज ! सत्सन्ता[3]नोदर्कोऽस्तु युवयोः परस्परानुरागः ।

**विधिः** - (स्मितं कृत्वा) जात्युचितं भाषसे । लोके हि ।

वाक्स्खालित्यवशेन तर्कितपरस्वान्तस्थितार्था मनाक्
सद्वा ❖भाव्यसदेव वा दृढतरं वक्ति प्रलोभादृतम् ।
तत्त्वं तावदवेति नैव वचसा [4]सार्वज्ञ्यमालम्बते
सद्यस्स्वेष्टसमर्थनाय बहुधा विप्रश्निका भाषते ।। 14 ।।

---

❖ विप्रश्निका = प्रश्नशास्त्रज्ञा ।

❖ भावि असदेव वा - इद पदच्छेदः ।

---

1. विप्र .... - ख
2. किलकिलिका - ख
3. नोदकोस्तु - ख
4. सार्वज्ञ - ख

**शक्तिः** - (सोत्कण्ठम्) ♦अअउत्त ! बहुमहिमसाळिणिं इमं भअवदीं एव्वं व्वं ण कहेदु भवम् ।

**विधिः** - (सान्तर्हासम्) अनिवार्यः स्त्रीस्वभावोऽनयाऽनुसृतः ।

(प्रकाशं) मुग्धेन हि परिहासवचसामुक्तार्थं एव तात्पर्यं नियतम् । अपि तु पहिरासमात्रे । अतस्ते यदभिलषितं तदवश्यं प्रष्टुमर्हसि । [1]तावन्मम मुहूर्तमिह विश्रान्तिरस्तु ।

(इति [2]प्रदेशान्तरं प्रति परिक्रामति)

**शक्तिः** - (सविनयम्) ❖भअवदि ! एत्थ उवविसदु अत्तहोदी ।

(उभे उपविशतः)

**विधिः** - दूरतः श्रृण्वन्नेवास्ते ।

**शक्तिः** - (अञ्जलिं बद्ध्वा) ❋भअवदि ! पणमेमि । किं मह सेअं भावि कहेहि ।

**प्रश्निका** - वत्से ! नाहं केवललौकिकीव विकत्थनमर्हामि । श्रृणु तावत् । भावनाप्रदर्शितोद्यानविहारवेळायामेव त्वमन्तर्वत्नी संवृत्ता । अतः प्रतिष्ठा नाम ते पुत्री जनिष्यते ।

**शक्तिः** - (सलज्जस्मितम्) ✷भअवदि । अजहथ्थं ण कहेहि ।

---

♦ आर्यपुत्र ! बहुमहिमशालिनीमिमां भगवतीमेवं न कथयतु भवान् ।

❖ भगवति ! अत्रोपविशत्वत्रभवती ।

❋ भगवति ! प्रणमामि । किं मम श्रेयो भावि कथय ।

✷ भगवति ! अयथार्थं न कथय ।

---

1. तावन्मुहूर्त - ख
2. इति .... रिक्रामति - क

**प्रश्निका** - वत्से ! परिदृश्यमानं तव दौहृदलक्षणमेव [1]मदुक्तमर्थं यथार्थयति ।

**विलक्षणो [2]वर्ष्मणि पाण्डिमा ते**
**कार्श्यं च किञ्चित् गुरुतोदरस्य ।**
**मनाग्व्यनक्त्यद्य मदुक्तमर्थम्**
(इति अर्द्धोक्ते कञ्चुकग्रन्थिं विस्रस्य)
**भृशं कुचाग्रं प्रकटीकरोति ।। 15 ।।**

**शक्तिः** - (लज्जामाना किञ्चिदपसरति)

**विधिः** - अयि हृदय ! तरळं मा भूरिति मन्यते ।

**विप्रश्निका** - वत्से ! मा व्रीडेः । इत इत एहि ।

**शक्तिः** - (यथावदुपसरति)

**विप्रश्निका** - (स्मितं कृत्वा)

**अयि शशिमुखि ! किञ्चित् पीड्यमानात् कुचाग्रा-**
**दुदयति यदि मुक्तासन्निभस्तन्यबिन्दुः ।**
**निभृतमपरिणामात् संशयग्रस्तमार्याः**
**जठरगतमपत्यं निर्विवादं वदन्ति ।। 16 ।।**

अतो मनाक् चूचुकं पीडयामि ।

(इति करं प्रसारयति)

**शक्तिः** - (सव्रीडाभरम्) ♦हा भअवदि ! दूरे चिठ्ठ ।

---

♦ हा भगवति ! दूरे तिष्ठ ।

---

1. मदुक्तं - ख
2. वर्ष्मिणि - ख

विप्रश्निका - (सशिरःकम्पं श्लाघयित्वा)

विस्पष्टार्द्रनखक्षताङ्किततटौ वक्षस्थली कुट्टन-
क्रीडाजाग्र[1]ददभ्रमेचकमुखौ शृङ्गारसर्वङ्कषौ ।
हे कल्याणि ! निसर्गबद्धपुळकावन्योन्यमालिङ्गितौ
दृष्टौ चेदतिसुन्दरौ तव कुचौ सद्यश्शिलापि द्रवेत् ।। 17।।

(इति स्तनाग्रं मुकुळहस्तेन स्पृष्ट्वा चुम्बनमभिनयति)

शक्तिः - (लज्जया सङ्कुचित[2]मुखी वर्तते)

♦नायकः - कथमद्य हृदयं द्रढयितुमर्हामि ।

विस्रम्भतः स्त्रीजनमात्रयोग्यां
शृङ्गारमुख्यामवशात् प्रसक्ताम् ।
वाचं क्रियां वा रहसि स्वगोष्ठ्यां
पुमान् गृहीत्वा भुवि कस्सहेत❖ ।। 18 ।।

(सविस्मयम्)

अभ्यर्णे त्वतिमात्रसम्भ्रमवशान्नैवावकाशो दृशो-
र्द्रष्टुं सम्यगहो नितान्तमधुना दूरान्मयाऽऽलोकिता ।

---

♦ 'विधिः' इति स्थाने एवं निर्दिष्टम् ।

❖ पादव्यत्ययेन अयं श्लोकः 'क' मातृकायां दृश्यते ।
स्त्रीणां स्वगोष्ठ्यां रहसि प्रसक्ताम्
श्रृङ्गारमुख्यां फणितिं क्रियां वा ।
विसृम्भतः स्त्रीजनमात्रयोग्यां
पुमान् गृहीत्वा भुवि कस्सहेत ।। 18 ।।

---

1. दुदग्र - ख
2. दृढयितु गर्हामि - ख

अस्याः खल्वनुभावसम्पदखिला श्रृङ्गारचेष्टा च किं
प्रस्तावैर्बहुभिस्सरोरुहभुवस्सर्गोऽयमन्यादृशः ।। 19 ।।

(इति मन्यते)

विप्रश्निका - (पुनः पुनः परीक्ष्य)

अये बहुपरीक्षया किमितरानपेक्षं स्वयं
व्यनक्ति हि तवोदरस्थितमपत्यमब्जानने ।
प्रतिक्षणविवृद्धिमत्पृथुकुचाग्रयोर्नीलिमा
कपोलतलपाण्डिमा ♦कळभदन्तसाधारणः ।। 20 ।।

[1]अतो गर्भाविर्भावश्चिह्नैरेव सुगमः । तथापि नाम विशिष्टं स्त्र्यपत्यमेव भविष्यतीत्येतन्मद्वचनादेव वेदितव्यम् । तदर्थमेव मदागमनम् । भाविनी च सा ते दुहिता भगवता वासवेन पूर्वमेव प्रतिष्ठेति कृताभिधाना [2]तदनुशासनादेव सुधर्मायां तव महोपकारिणो नियोगस्य [3]ब्रह्मचर्यव्रतोत्सर्गाय भविष्यति ।

शक्तिः - (स्मृतिमभिनीय, स्वगतम्) ❖आः ! एव्वं आदिट्ठं खु तहव्व तदाणिं भअवदा सहस्सळोअणेण (प्रकाशम्) भअवदि ! तदो, तदो ।

---

♦ कळभः = गजः ।

❖ आ ! एवमादिष्टं खलु तथैव तदानीं भगवता सहस्रलोचनेन । भगवति ! तत-स्ततः ।

---

1. अथो - ख
2. ..... नु - ख
3. ..... चर्य - ख

**विप्रश्निका** - अमुमेवार्थं स्मारयितुमिन्द्रानुशासनात् त्वदर्थमभिनवं विमानं सद्यो रचयता भगवता विश्वकर्मणा सर्वाद्भुतनिधौ तस्मिन्नहं मणिसालभञ्जिकारूपेण स्फटिकस्तम्भेऽ[1]ध्यासिता खलु सुरलोकविप्रश्निका ।

**शक्तिः** - (सशिरःकम्पम्) ♦भअवदि ! मुणिदं, मुणिदं ।

**विप्रश्निका** - (उत्थानं नाटयति)

**शक्तिः** - (भक्त्यतिशयं निरूप्य विप्रश्निकायाश्चरणौ स्पृष्ट्वा प्रणमति)

**विप्रश्निका** -

**स्मेराननाय शिशवे प्रतिमुहुरचिरेण सादरं रहसि ।**
**करतलपीडितचूचुकमुत्सङ्गस्थाय दास्यसि स्तन्यम् ।। 21।।**

अपि च -

**आचन्द्रार्कं जीवमाङ्गल्ययुक्ता**
**पत्याः कामं प्रेमपात्रं च भूयाः ।**
**अन्तःखेलड्डिम्भकैरस्तु जाते !**
**डोलायन्त्रैस्सान्द्रमन्तःपुरं ते ।। 22 ।।**

(इति निष्क्रान्ता)

**शक्तिः** - ([2]कञ्चुकग्रन्थिं द्रढयित्वा इतस्ततोऽवलोक्य च) ❖कहिं ठाइ अअउत्त?

---

♦ भगवति ! ज्ञातम् ; ज्ञातम् ।

❖ कुत्र तिष्ठति आर्यपुत्रः ।

---

1. ऽध्यासिता - ख
2. .....ञ्चुक - ख

**विधिः** - (सत्वरमुपसृत्य) अयि ! किमुक्तं विप्रश्निकया ।

**शक्तिः** - ♦ठिदं एव्वं क़हिदं ।

**विधिः** - कथम् ।

**शक्तिः** - ❖एव्वं विअ ।

**विधिः** - अवश्यमावयो[1]र्जामाता च भवतु महोपकारी नियोगः । (सहर्षोत्कर्षम्) प्रिये ! पश्य ।

**नीता [2]भावनया पुनश्च सविधं प्राप्तासि [3]दिष्ट्याद्य मे**
**विश्रान्तिस्तु नियोग एव विबुधैरप्यावयो[4]र्निश्चिता ।**
**श्रेयश्चास्त्यधिकं भविष्य[5]दथकस्साध्यावशेषस्त्रयी-**
**मारोहामि समस्तधर्मनिचयत्राणाय सिंहासनम् ।। 23 ।।**

किमतः प्रियमुपहरामि । तथापीदमस्तु । भरतवाक्यम् ।

**जयतु विधिनिबद्धा पट्टभद्रस्य वाणी**
**गुरुमतदृढबुद्धेर्वेङ्कटेशार्यसूनोः ।**

---

♦ स्थितमेव कथितम् ।

❖ एवमिव ।

---

1. र्जा ..... च - ख
2. ..... वनया - ख
3. मिष्या - ख
4. र्निश्चितः - ख
5. दयकस्सर्च्या - ख

निगममनुसरन्तः स्वस्वधर्मे रमेरन्
सततमखिललोका वर्धतां चैष धर्मः ।। 24 ।।

(यथोचितं परिक्रम्य निष्क्रान्तास्सर्वे)

इति श्रीशैलकुलपारावारपारिजातस्य प्राभाकरमहासमुद्र-
कूलङ्कषधिषणस्य तातपादपादपद्मपरिचर्यालब्धसकल-
सारस्वतसमुदयस्य विद्वत् कविराजपट्टभद्र बिरुद-
समाख्याविख्यातस्य प्राभाकरवेङ्कटाचार्यतनयस्य
श्रीनिवासाचार्यवर्यस्य कृतिषु प्रौढाभिरामे
पञ्चमोऽङ्कः

प्रौढाभिराममित्थं प्राभाकरवेङ्कटेशगुरुसूनुः ।
व्यधित निजां निर्वोढुं विद्वत्कविराजपट्टभद्राख्याम् ।।

पूर्णं चेदं प्रौढाभिरामं नाटकम् ।

---

तर्के कर्कशधीः स्वतन्त्रसरणिस्तन्त्रे तथान्ते श्रुते-
शशब्दे शिक्षितगीः सुकाव्यकलने वल्मीकजन्मापरः ।
विद्वद्भिस्समितौ परीक्ष्य मुदितैः प्राभाकरे दर्शने
[1]तन्नाम्ना समलङ्कृतो विजयतां श्रीवेङ्कटेशो गुरुः ।।

---

1. तन्त्राम्ना - ख

तर्के वालङ्कृतौ वा फणिपतिफणितौ तन्त्रवेदान्तयोर्वा
छन्दोज्योतिः पुराणस्मृतिसरणिषु वा साङ्गनाट्यागमे वा ।
विद्यास्वन्यासु वापि प्रतिभटविजयी ग्रन्थनिर्माण धुर्यः
श्रीनिवासाचार्यतुल्यो ननु धरणितले मृग्यतां पण्डितोऽन्यः ।।



# पद्यानुक्रमणिका

## अ

